## ३६६ । इतोऽत्सर्वनामस्थाने । (७-१-८६)

पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे ।

## ३६७ । थो न्थः । (७-१-८७)

पथिमथोस्थस्य न्थादेशः स्यात्सर्वनामस्थाने परे । पन्थाः, पन्थानौ, पन्थानः । पन्थानम्, पन्थानौ ।

## ३६८ । भस्य टेर्लोपः । (७-१-८८)

भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात् । पथः । पथा, पथिभ्यामित्यादि । एवं मन्थाः । ऋभुक्षाः । स्त्रियां नान्तलक्षणे ङीपि भत्वाट्टिलोपः । सुपथी

---

'ज्यादादीयसः' इति सूत्रे आदिति तपरनिर्देशेन इयं परिभाषा ज्ञाप्यते । 'भाव्यमानेन सवर्णानां ग्रहणन्न' इत्येव भाष्ये पाठात् । अणुदित्सूत्रभाष्येऽप्यण्ग्रहणरहितायाः एवास्याः परिभाषायाः पाठदर्शनाच्चेत्यास्तान्तावत् । नकारस्य आत्त्वे पथि आ स् इति स्थिते । **इतोऽत्** ॥ पथिमथ्यृभुक्षाम् इत्यनुवर्तते । इत इति तपरकरणं स्पष्टार्थम् । पथ्यादिषु त्रिषु दीर्घप्लुतयोरसम्भवात् । भाव्यमानत्वादेव सवर्णाग्राहकत्वे सिद्धे अदिति तपरकरणमपि स्पष्टार्थमेव । तदाह । **पथ्यादेरित्यादिना** ॥ पथ आ स इति स्थिते । **थो न्थः** ॥ थ, न्थ, इति छेदः । थ इति षष्ठी । आदेशे अकार उच्चारणार्थः । पथिमथिग्रहणमनुवर्तते । ऋभुक्षिग्रहणन्निवृत्तम् । तत्र थकाराभावात् 'इतोऽत्सर्वनामस्थाने' इत्यतस्सर्वनामस्थानग्रहणमनुवर्तते । तदाह । **पथिमथोरित्यादिना** ॥ **पन्थाः इति** ॥ नकारस्य आत्त्वे थकारस्य न्थादेशे पन्थ आ स् इति स्थिते सवर्णदीर्घे रुत्वविसर्गाविति भावः । **पन्थानाविति** ॥ पथिन् औ इति स्थिते सावित्युक्तेर्नात्त्वम् । 'इतोऽत्' इति इकारस्यात्त्वे थकारस्य न्थादेशे 'सर्वनामस्थाने च' इति दीर्घे रूपमिति भावः । एवं पन्थानः । पन्थानम्, पन्थानौ । शसादावचि विशेषमाह । **भस्य टेर्लोपः** ॥ **पथ्यादेरिति** ॥ पथिमथ्यृभुक्षाम् इत्यनुवर्तते इति भावः । **पथः । पथेति** ॥ पथिन् अस् पथिन् आ इति स्थिते इनो लोपे रूपद्वयमिति भावः । **पथिभ्यामिति** ॥ नलोपे रूपम् । **इत्यादीति** ॥ पथिभिः । पथे । पथिभ्यः । पथः, पथोः, पथाम् । पथि, पथोः, पथिषु । **एवं मन्थाः, ऋभुक्षाः इति** ॥ मन्थदण्डवाची मथिन्शब्दः । तस्य आत्त्वम्, अत्त्वं, न्थादेशः, टिलोपश्च । मन्थाः, मन्थानौ, मन्थानः । मन्थानम्, मन्थानौ, मथः । मथा, मथिभ्याम् । मथे । मथः । मथोः । मथाम् । मथि । मथिषु । ऋभुक्षिन्शब्दस्तु इन्द्रवाची । तत्र 'थो न्थः' इति वर्जमात्त्वादि भवति । षात्परत्वाण्णत्वञ्च । ऋभुक्षाः, ऋभुक्षाणौ इत्यादि । यत्तु अत्र पन्थानमात्मन इच्छति पथीयति 'सुप आत्मनः क्यच्, न क्ये' इति पदत्वात् नलोपः । 'अकृत्सार्वधातुकयोः' इति दीर्घः । 'सनाद्यन्ताः' इति धातुत्वम् । ततः क्विप् । अल्लोपयलोपौ । एकदेशविकृतस्यानन्यत्वात् 'पथिमथि' इत्यात्त्वं, 'थो न्थः । इतोऽत्' इत्यत्त्वन्तु तपरकरणान्न

नगरी । अनृभुक्षी सेना । आत्त्वं नपुंसके न भवति 'न लुमता—' (सू २६३) इति प्रत्ययलक्षणनिषेधात् । सुपथि वनम् । 'सम्बुद्धौ नपुंसकानां नलोपो वा वाच्य' (वा ४७८६) । हे सुपथिन्–हे सुपथि । 'नलोप सुप्स्वर—' (सू ३५३) इति नलोपस्यासिद्धत्वाद्धस्वस्य गुणो न । द्विवचने भत्वाट्टिलोप । सुपथी । शौ सर्वनामस्थानत्वात्सुपन्थानि । पुनरपि सुपथि, सुपथी, सुपन्थानि । सुपथा । सुपथे । सुपथिभ्यामित्यादि ।

### ३६९ । ष्णान्ता षट् । (१-१-२४)

---

भवति । पन्था । 'एरनेकाच' इति यण बाधित्वा परत्वान्नित्यत्वाच्च 'थो न्थ'। ततस्सयोगपूर्वत्वान्न यण् । किन्त्वियडेव । पन्थियौ । 'भस्य टेर्लोप' पथ इत्यादिप्रौढमनोरमातत्त्वबोधिन्यादावुक्तम् । तदेतदनुनासिकविधौ सति प्रतिपत्तिलाघवायानुनासिकस्यैव उच्चारणे कार्ये तदनुच्चारणाच्छुद्धस्यैव विधानमिति भाष्यविरोधादुपेक्ष्यम् । पथीयते क्विपि हि नकारस्य शुद्धाकारार्थं अनुनासिकानुच्चारणस्यावश्यकत्वे तदसङ्गति स्पष्टैव । तस्मात् पथीयते क्विप अनभिधानमेवोचितमिति शब्देन्दुशेखरे स्पष्टम् । प्रसङ्गादाह । **स्त्रियामिति** ॥ सु शोभन पन्था अस्या इति बहुव्रीहि । 'ऋन्नेभ्य' इति ङीप् । 'भस्य टेर्लोप' इति इनो लोप । सुपथीति रूपम् । 'ऋक्पू' इत्यप्तु न । 'न पूजनात्' इति निषेधात् । नचैवमपि 'न पूजनात्' इति निषेधस्य षच प्रागेव प्रवृत्तेर्वक्ष्यमाणत्वात् 'इनस्स्त्रियाम्' इति कप् दुर्वार एवेति वाच्यम् । 'युवोरनाकौ' इत्यत्र सुपथीति भाष्यप्रयोगेण तस्या अनित्यत्वज्ञापनात् । नच लिङ्गविशिष्टपरिभाषया 'पथिमथि' इत्यात्त्व, थो न्थश्च कुतो नेति वाच्यम् । विभक्तौ लिङ्गविशिष्टाग्रहणात् । **सुपथी इति** ॥ सु शोभनो पन्था यस्या इति विग्रह । ङीबादि पूर्ववत् । **अनृभुक्षी सेनेति** ॥ अविद्यमान ऋभुक्षा यस्या इति विग्रह । 'नञोऽस्त्यर्थानाम्' इति समास । अथ सु शोभन पन्था अस्य वनस्येति बहुव्रीहौ सुपथिन्शब्दान्नपुसकात् 'स्वमोर्नपुसकात्' इति सोर्लुकि प्रत्ययलक्षणमाश्रित्य सुप्परत्वसत्वात् 'पथिमथि' इत्यात्त्वमाशङ्क्य आह । **आत्त्वन्नपुंसके इति** ॥ **सम्बुद्धाविति** ॥ यद्यपि भाष्ये नपुसकानामित्येव पठितम् । तथापि हे चर्मन् हे चर्मेति भाष्ये सम्बुद्धावेव उदाहृतत्वात् तन्मात्रविषयत्वमस्येति भाव । सम्बुद्धेर्लुका लुप्तत्वात् सम्बुद्धिपरत्वाभावात् 'न ङिसम्बुद्ध्यो' इति निषेधाप्रवृत्ते नित्यन्नलोपप्राप्तौ विकल्पार्थोऽयमारम्भ । ननु नलोपपक्षे 'ह्रस्वस्य गुण' इति सम्बुद्धौ परत गुणे कर्तव्ये 'न लुमता' इति निषेधस्यानित्यत्वात् हे वारे–हे वारि इतिवत् गुणविकल्पस्स्यादित्यत आह । **नलोपः सुबिति** ॥ **द्विवचने इति** ॥ सुपथिन्शब्दात् औड शीभावे सति असर्वनामस्थानत्वेन भत्वात् 'भस्य टेर्लोप' इति इनो लोपे सुपथी इति रूपमित्यर्थ । **शाविति** ॥ सुपथिन्शब्दात् जश्शसोश्शिभावे सति तस्य सर्वनामस्थानत्वात् 'इतोऽत्' इत्यत्त्वे, 'थो न्थ' इति थस्य न्थादेशे नान्तत्वात् दीर्घे सुपन्थानि इति रूपमित्यर्थ । पञ्चन्शब्दो नित्य बहुवचनान्तः । तस्य षट्सञ्ज्ञाकार्यं लुक विधास्यन् षट्सञ्ज्ञामाह । **ष्णान्ता षट्** ॥ ष्च नश्च

षान्ता नान्ता च सङ्ख्या षट्संज्ञा स्यात्। 'षड्भ्यो लुक्' (सू २६१)' पञ्च। पञ्च। 'सङ्ख्या' किम्। विप्रुष। पामान। 'शतानि' 'सहस्राणि। इत्यत्र सन्निपातपरिभाषया न लुक्। सर्वनामस्थानसन्निपातेन कृतस्य नुमस्तद्विघातकत्वात्। पञ्चभि। पञ्चभ्य। पञ्चभ्य। 'षट्चतुर्भ्यश्च' (सू ३३८) इति नुट्।

## ३७०। नोपधायाः। (६-४-७)

नान्तस्योपधाया दीर्घ स्यान्नामि परे। नलोप। पञ्चानाम्। पञ्चसु परमपञ्च। परमपञ्चानाम्। गौणत्वे तु न लुग्नुटौ। प्रियपञ्चा। प्रियपञ्चानौ। प्रियपञ्चान.। प्रियपञ्ञ्चाम्। एवं सप्तन नवन् दशन्।

---

ष्णौ ष्टुत्वेन ण। ष्णो अन्तौ यस्यास्सा ष्णान्ता। 'बहुगणवतुडति सङ्ख्या' इत्यत सङ्ख्येत्यनुवर्तते। तत्र पूर्वसूत्रे बहुगणवतुडतिपरमपि शब्दाधिकारादिह पञ्चषडित्यादिप्रसिद्धसङ्ख्याबोधकशब्दपरमाश्रीयते। बहुगणवतुडतिषु ष्णान्तत्वासम्भवात्। तदाह। **षान्तेत्यादिना॥ षड्भ्यो लुक् इति॥** अनेन जश्शसोर्लुगिति शेष। **पञ्च। पञ्चेति॥** जश्शसोर्लुकि नलोप इति भाव। **सङ्ख्या किमिति॥** सङ्ख्याग्रहणानुवृत्ते कि फलमिति प्रश्न। **विप्रुषः। पामानः इति॥** विप्रुषूशब्दस्य पामन्शब्दस्य च ष्णान्तत्वेऽपि सङ्ख्यावाचकत्वाभावेन षट्सञ्ज्ञाविरहात् तत परस्य जसो न लुगिति भाव। ननु शतशब्दात् जश्शसोश्शिभावे 'नपुसकस्य झलच' इति नुमि 'सर्वनामस्थाने च' इति दीर्घे शतानीति रूपम्। एव सहस्राणीत्यपि रूपम्। तत्र 'अट्कुप्वाङ्' इति णत्व विशेष। इह 'तदागमा' इति न्यायेन नुम अङ्गभक्तत्वात् शतन्शब्दसहस्रन्शब्दयो नान्तसङ्ख्याशब्दत्वात् षट्सञ्ज्ञाया सत्या 'षड्भ्यो लुक्' इति जश्शसोर्लुक् स्यादत आह। **शतानीत्यादि॥ सर्वनामेति॥** सर्वनामस्थान परत्वेन उपजीव्य प्रवृत्तस्याम सन्निपातपरिभाषया सर्वनामस्थानभूतजश्शसोर्लुक प्रति निमित्तत्वाभावादित्यर्थ। **पञ्चभिः। पञ्चभ्यः इति॥** नलोपे रूपम्। पञ्चन् आम् इति स्थिते। 'षट् चतुर्भ्यश्च' इति नुटि नलोपे तस्यासिद्धत्वात् 'नामि' इति दीर्घे अप्राप्ते आह। **नोपधायाः॥** नेति लुप्तषष्ठीकम् अङ्गस्येत्यधिकृतस्य विशेषणम्। तदन्तविधि। 'ढ्लोपे' इत्यतो दीर्घ इत्यप्यनुवर्तते। 'नामि' इति सूत्रञ्च। तदाह। **नान्तस्येत्यादिना॥ नलोपः इति॥** नलोपस्यासिद्धत्वात् प्रथम दीर्घे ततो नलोप इत्यर्थ। **परमेति॥** परमाश्च ते पञ्च चेति विग्रह। 'षड्भ्यो लुक्' इत्यस्य 'षट्चतुर्भ्यश्च' इत्यस्य चाङ्गत्वात् तदन्तेऽपि प्रवृत्तिरिति भाव। प्रिया पञ्च यस्येति बहुव्रीहौ प्रियपञ्चन्शब्दो विशेष्यनिघ्न त्रिलिङ्ग। तस्य पुस्त्वे विशेषमाह। **गौणत्वे त्विति॥** 'षड्भ्यो लुक्' इति 'षट्चतुर्भ्यश्च' इति च बहुवचननिर्देशेन षट्चतुरर्थप्राधान्यावगमादिति भाव। **प्रियपञ्चेति॥** सुटि हलादौ च राजवत्। शसादावचि तु 'अल्लोपोऽन' इत्यकारलोपे नुटश्चुत्वेन ञकार। चकारे तु परे अनुस्वारस्य परसवर्णे ञकारः

## ३७१ । अष्टन आ विभक्तौ । (७-२-८४)

अष्टन आत्व स्याद्धलादौ विभक्तौ ।

## ३७२ । अष्टाभ्य औश् । (७-१-२१)

कृताकारादष्टन परयोर्जश्शसोरौश् स्यात् । 'अष्टभ्य' इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । 'वैकल्पिक चेदमष्टन आत्वम्' । 'अष्टनो दीर्घात्' (सू ३७१८) इति सूत्रे दीर्घग्रहणाज्ज्ञापकात् । अष्टौ । अष्टौ । परमाष्टौ । अष्टाभि । अष्टाभ्य । अष्टाभ्य ।

---

स्थित एव । तथाच जकारद्वयमध्ये चकार । अष्टन्शब्दो नित्य बहुवचनान्त । तस्य विशेषमाह । **अष्टन आ विभक्तौ** ॥ 'रायो हलि' इत्यत हलि इत्यपकृष्यते । तच्च विभक्तेर्विशेषणम् । तदादिविधि । तदाह । **अष्टन आत्वमित्यादिना** ॥ ग्रहणकसूत्रे अण्ग्रहणेन वार्णसमाम्नायिकानामेव ग्रहणादाकारस्यानण्वात् भाव्यमानत्वाच्च शुद्ध एव नकारस्य अकार । **अष्टाभ्य औश्** ॥ 'जश्शसोश्शि' इत्यत जश्शसोरित्यनुवर्तते । अष्टाभ्य इति पञ्चमी । तस्मादित्युत्तरस्येत्युपतिष्ठते । अष्टा इत्याकारान्तशब्दो विवक्षित । तदाह । **कृताकारादित्यादिना** ॥ नकारस्यात्वे कृते सति य अष्टाशब्द तस्मादित्यर्थ । शित्त्वात् सर्वादेश । 'आदे परस्य' इति तु नात्र प्रवर्तते । 'अनेकाल्शित्' इति परणे तस्य बाधात् । औशादेशोऽय 'षड्भ्यो लुक्' इत्यस्यापवाद । ननु जश्शसो परत अष्टन्शब्दस्यात्वन्नास्त्येव । 'अष्टन आ विभक्तौ' इति आत्वविधौ हलीत्यपकर्षस्य उक्तत्वात् । ततश्च जश्शसोरौश्विधौ कृताकारात् अष्टन इत्यनुपपन्नम् । तत्राह । **अष्टभ्य इति वक्तव्ये इत्यादि** ॥ भ्यसि अष्टाभ्य – अष्टभ्य इति रूपद्वये सत्यपि औश्विधौ लाघवादष्टभ्य इत्येव निर्देश उचित । आकारनिर्देशात्तु जश्शसोरचि परतोऽप्यात्व विज्ञायत इत्यर्थ । ननु 'अष्टन आ विभक्तौ' इति हलादिविभक्तौ अष्टनो नित्यमात्वविधानात् अष्टाभ्य इत्येव निर्देष्टव्यम् । प्रामाणिकगौरवस्यादोषत्वात् । ततश्च औश्विधौ अष्टाभ्य इति निर्देश जश्शसोरष्टन कथमात्व ज्ञापयेदित्यत आह । **वैकल्पिकश्चेदमिति** ॥ **ज्ञापकादिति** ॥ 'अष्टनो दीर्घात्' इति सूत्रम् । दीर्घान्तादष्टन्शब्दात् परा असर्वनामस्थानविभक्तिरुदात्ता स्यादिति तदर्थ । अष्टाभिर्विकर्षतीत्यत्र भकारादिकार उदात्त । 'अनुदात्त पदमेकवर्जम्' इति शिष्टमनुदात्तम् । दीर्घादिति विशेषणात् अष्टभिरित्यत्र आत्वाभावस्थले भिस उदात्तत्वन्न भवति । किन्तु मध्योदात्तत्वमेव । झल्युपोत्तममित्यस्यानुवृत्ते । षट्चतुर्भ्यो या झलादिविभक्ति तदन्ते पदे विद्यमानमुपोत्तममुदात्त स्यादिति तदर्थ । यदि तु अष्टन आत्व नित्य स्यात् तर्हि अष्टभिरिति ह्रस्वान्तव्यावृत्तये क्रियमाणदीर्घग्रहणमनर्थक स्यात् । व्यावर्त्याभावात् । आत्वस्य विकल्पितत्वे तु तदभावपक्षे अष्टभिरिति व्यावर्त्यस्य सत्त्वात् दीर्घग्रहणमर्थवत् । अतो दीर्घग्रहणमष्टन आत्वस्य वैकल्पिकत्वे ज्ञापकमित्यर्थ । **अष्टाविति** ॥ अष्टन्शब्दात् जश्शसोरौश् । शित्त्वात् सर्वादेश । अष्टाभ्य इति निर्देशात्

**अष्टानाम्। अष्टासु। आत्वाभावे। अष्ट। अष्ट। इत्यादि पञ्चवत्। गौणत्वे त्वात्वाभावे राजवत्। शसि प्रियाष्ट्नः। इह पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावान्न ष्टुत्वम्। कार्यकालपक्षे बहिरङ्गस्याल्लोपस्यासिद्धत्वाद्वा।**

---

नकारस्यात्व, सवर्णदीर्घ, वृद्धिरिति भाव। **परमाष्टाविति**॥ 'अष्टाभ्य औश्' इत्यस्य आङ्गत्वात्तदन्तेऽपि प्रवृत्तिरित्यर्थ। **अष्टभिरिति**॥ भिसादौ आत्वे सवर्णदीर्घ। **अष्टानामिति**॥ आदौ नुटि कृते सति हलादित्वादात्वम्। नच नान्तत्वप्रयुक्तषट्सञ्ज्ञकशब्दसन्निपातमुपजीव्य प्रवृत्तस्य नुट तद्विघातकमात्व प्रति कथन्निमित्तत्वमिति वाच्यम्। नहि षट्सन्निपातेन जातस्य नुट आत्वविघातकत्वम्। 'शमामष्टाना दीर्घश्शयनि' इत्यादिनिर्देशेन अत्र सन्निपातपरिभाषाया अनित्यत्वाश्रयणादिति भाव। **आत्वाभावे इति**॥ 'अष्टनो दीर्घात्' इति दीर्घग्रहणेनात्वविकल्पस्य ज्ञापितत्वादिति भाव। यद्यपि 'अष्टनो दीर्घात्' इति सूत्रे शसादिविभक्तिषु परत स्वरविधायके दीर्घग्रहण शसादिष्वेवात्वविकल्प ज्ञापयितु शक्नोति। नतु जसि। तथापि ज्ञापकस्य सामान्यापेक्षत्वाज्जस्यप्यात्वविकल्प इति भाव। प्रिया अष्टौ यस्येति बहुव्रीहौ प्रियाष्टन्शब्दो विशेष्यनिघ्न एकद्विबहुवचनान्त। तत्र विशेषमाह। **गौणत्वे त्विति**॥ अष्टन्शब्दार्थस्याप्राधान्ये सतीत्यर्थ। **आत्वाभावे इति**॥ 'अष्टनो दीर्घात्' इति दीर्घग्रहणेनात्वस्य वैकल्पिकत्वज्ञापनादिति भाव। **राजवदिति**॥ प्रायेणेति शेष। प्रियाष्टा, प्रियाष्टानौ, प्रियाष्टान। प्रियाष्टानम्, प्रियाष्टानौ। **शसि प्रियाष्ट्नः इति**॥ 'अल्लोपोऽन' इत्यकारलोप। ननु कृते अल्लोपे नकारस्य ष्टुत्वेन णत्व कुतो न स्यादित्यत आह। **इहेति**॥ इहाल्लोपस्य स्थानिवद्भावान्न ष्टुत्वमित्यन्वय। अल्लोपस्य स्थानिवत्त्वे सति अकारव्यवहितत्वान्न ष्टुत्वमिति भाव। ननु "स्थानिनि सति यत्कार्यं तदेवादेशेऽतिदिश्यते। स्थानिनि सति यत्कार्यं न भवति तदादेशे न भवति" इत्येव कार्याभावस्तु नातिदिश्यते। अन्यथा नायक इत्यादौ आयाद्यभावप्रसङ्गादिति स्थानिवत्सूत्रे स्थितम्। तस्मादल्लोपस्य स्थानिवत्त्वात् न ष्टुत्वमित्यनुपपन्नम्। 'अच परस्मिन्' इति सूत्रन्तु यद्यपि स्थानिनि सति यत्कार्यन्न भवति तदादेशेऽपि न भवतीत्येव कार्याभावस्यातिदेशिकम्। तथापि न तस्यात्र प्रवृत्तिरस्ति। स्थानिभूतादच पूर्वस्यैव विधौ तत्प्रवृत्ते। इह च स्थानिभूतादच परस्यैव ष्टुत्वप्रवृत्तेरित्यत आह। **पूर्वस्मादपि विधाविति**॥ स्थानिभूतादच पूर्वस्मात् परस्यापि विधौ स्थानिवत्त्वाभ्युपगमादित्यर्थ। 'नच पूर्वत्रासिद्धीये न स्थानिवत्' इति निषेधश्शङ्क्य। 'तस्य दोषस्सयोगादिलोपलत्वणत्वेषु' इति तन्निषेधात्। 'अट्कुप्वाङ्' इति णत्वन्तु न शङ्क्यम्। टकारेण व्यवधानात्। शब्दकौस्तुभे तावत् 'तस्य दोष' इत्यत्र णत्वग्रहणम्मास्त्वित्युक्तम्। तद्रीत्या आह। **बहिरङ्गस्याल्लोपस्यासिद्धत्वाद्वेति**॥ अल्लोप. अङ्गसञ्ज्ञाभसञ्ज्ञापेक्षत्वाद्बहिरङ्ग.। ष्टुत्वन्तु तदनपेक्षत्वात् अल्पापेक्षत्वादन्तरङ्ग.। तस्मिन् कर्तव्ये बहिरङ्गस्याल्लोपस्यासिद्धत्वादकारव्यवहितत्वात् न ष्टुत्वमित्यर्थ। यथोद्देशपक्षे 'असिद्ध बहिरङ्गम्' इति षाष्ठीं परिभाषा प्रति श्चुत्वस्यासिद्धतया अन्तरङ्गाभावेन परिभाषाया अप्रवृत्तेः कथमिहाल्लोपस्यासिद्धत्वमित्यत आह। **कार्यकालपक्षे इति**॥ लक्ष्यानुरोधादिह यथोद्देश-

प्रियाष्ट्ना इत्यादि । जश्शसोरनुमीयमानमात्वं प्राधान्य एव । न तु गौणतायाम् । तेन प्रियष्ट्नो हलादावेव वैकल्पिकमात्वम् । प्रियाष्टा । प्रियाष्टाभ्याम् । प्रियाष्टाभिः । प्रियाष्टाभ्य । प्रियाष्टाभ्य । प्रियाष्टासु ।

"प्रियाष्ट्नो राजवत्सर्वं हाहावच्चापर हलि ।"

इति नान्ता ।

---

पक्षो नाश्रीयते इत्यन्यत्र विस्तर । अथ प्रियाष्टन्शब्दस्यात्वपक्षे विशेषमाह । **जश्शसो रिति** ॥ 'अष्टाभ्य औश्' इति जश्शसोरौशादेशविधौ कृतात्वनिर्देशान् ज्ञाप्यमानमात्वमष्टन्शब्दस्य प्राधान्ये सत्येव भवति । न तूपसर्जनत्वेऽपि । अष्टाभ्य इति बहुवचननिर्देशात् । "अन्यथा हाह इति पञ्चम्यन्तवत् 'अष्ट औश्' इति निर्दिशेत्" इति 'ष्णान्ता षट्' इति सूत्रे भाष्ये स्पष्टम् । तत किमित्यत आह । **तेनेति** ॥ अष्टन्शब्दस्य गौणताया जश्शसोर्विषये आत्वाभावेनेत्यर्थ । **हलादावेवेति** ॥ 'अष्टन आ विभक्तौ' इत्यत्र अष्टन इत्येकवचननिर्देशेन अष्टन्शब्दार्थस्य प्राधान्याश्रयणे मानाभावादिति भाव । 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय' इत्यपि नात्र प्रवर्तते । तथा सति 'अष्टाभ्य औश्' इत्यत्र बहुवचनवैयर्थ्यादिति बोध्यम् । हलादावेवेत्येवकारेण जश्शसोरप्यात्वस्य पक्षेऽपि व्यावृत्तिरुक्तैवानूद्यते । औडादौ तु हलादित्वाभावादेव आत्वस्य न प्रसक्ति । **प्रियाष्टाः इति** ॥ सौ हलि 'अष्टन आ विभक्तौ' इत्यात्वे रुत्वविसर्गौ इति भाव । 'षड्भ्यो लुक्' इति, 'षट्चतुर्भ्य' इति च, गौणताया न प्रवर्तत इति च प्रागुक्त न विस्मर्तव्यम् । तथा च अजादौ सर्वत्र राजवदेव रूपाणि । हलादिषु पक्षे आत्वमिति स्थितम् । तदेतत्सङ्गृह्णाति । **प्रियाष्ट्नो राजवदिति** ॥ प्रियाष्टन्शब्दस्याजादिषु विभक्तिषु राजवदेव सर्वं रूपम् । हलादिषु विभक्तिषु तु हाहाशब्दवदन्यच्च रूपम् । चकाराद्राजवदपि । तदित्थमत्र रूपाणि । प्रियाष्टा । प्रियाष्टा, प्रियाष्टानौ, प्रियाष्टान । प्रियाष्टानम्, प्रियाष्टानौ । प्रियाष्ट्ना । प्रियाष्टाभ्याम्–प्रियाष्टभ्याम् । प्रियाष्टाभि –प्रियाष्टभि । प्रियाष्ट्ने । प्रियाष्टाभ्याम्–प्रियाष्टभ्याम् । प्रियाष्टाभ्य –प्रियाष्टभ्य । प्रियाष्ट्न, प्रियाष्टाभ्याम्–प्रियाष्टभ्याम् । प्रियाष्टाभ्य –प्रियाष्टभ्य । प्रियाष्ट्न । प्रियाष्ट्नो । प्रियाष्ट्नाम् । प्रियाष्ट्नि–प्रियाष्टनि । प्रियाष्ट्नो । प्रियाष्टासु–प्रियाष्टसु । वस्तुतस्तु 'ष्णान्ता षट्' इति सूत्रे भाष्ये 'अष्टन आ विभक्तौ' इत्यत्र हलीत्यपकर्षमुक्त्वा "प्रियाष्टौ, प्रियाष्टा इति न सिध्यति । प्रियाष्टानौ, प्रियाष्टान इत्येव प्राप्नोति" इति शङ्किते "यथालक्षणमप्रयुक्ते" इति समाहितम् । "नैव वा लक्षणमप्रयुक्ते प्रवर्तते । प्रयुक्तानामेवान्वाख्यानात्" इति कैयट । एवञ्च एषामनभिधानमेवोचितम् । अत एव 'अष्टाभ्य औश्' इति सूत्रे भाष्ये "अष्टन आत्व इह वैकल्पिकम् । यदयमात्वभूतस्य ग्रहण करोति अष्टाभ्य इति । अन्यथा अष्टन इत्येव ब्रूयात्" इत्युक्तम् । प्रियाष्टन्शब्दस्य लोके प्रयोगसत्वे तु तत्र गौणे औशादेशप्रवृत्त्यभावाय बहुवचननिर्देशस्यावश्यकत्वात् तदसङ्गति स्पष्टैव । तस्मात् "प्रियाष्टन्शब्दप्रयोगविचारस्सर्वोऽपि अभित्तिचित्रायित" इति शब्देन्दुशेखरे प्रपञ्चितम् ॥

इति नान्ता ।

## ॥ अथ हलन्तपुल्लिँङ्गे धकारान्तप्रकरणम् ॥

भष्भाव । जश्त्वचर्त्वे । भुत्-भुद्, बुधौ, बुध । बुधा । भुद्भ्याम् । भुत्सु ।

इति धान्ता ।

## ॥ अथ हलन्तपुल्लिँङ्गे जकारान्तप्रकरणम् ॥

३७३ । ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च । (३-२-५९)

एभ्य क्विन् स्यात् । अलाक्षणिकमपि किञ्चित्कार्यं निपातनाल्लभ्यते । निरुपपदाद्युजे. क्विन् । कनावितौ ।

---

अथ धकारान्ता निरूप्यन्ते ॥ 'बुध अवगमने' कर्तरि क्विप् । बुध् इति धकारान्तश्शब्द । ततस्सुबुत्पत्ति । सौ विशेषमाह । **भष्भावः इति** ॥ हल्ङ्यादिना सुलोपे सति प्रत्ययलक्षणमाश्रित्य सकारपरकत्वाद्वा पदान्तत्वाद्वा 'एकाचो बश' इति बकारस्य भष्भकार इत्यर्थ । **जश्त्वचर्त्वे इति** ॥ 'वाऽवसाने' इति चर्त्वविकल्प इति भाव । भ्यामादौ 'स्वादिषु' इति पदत्वात् भष् जश्त्वम् । भुद्भ्याम् । भुद्भि । भुद्भ्य । भुत्सु ॥

इति धान्ता ।

---

अथ जकारान्ता निरूप्यन्ते । अथ यज्शब्दस्य व्युत्पत्तिन्दर्शयितुमाह । **ऋत्विग्दधृक्** ॥ धातोरित्यधिकृत स्पृशोऽनुदके क्विन्नित्यनुवर्तते । पञ्चम्यर्थे षष्ठी । तदाह । **एभ्यः इति** ॥ ऋतौ उपपदे यज्धातो, धृष्धातो, सृज्धातो, दिश्धातो, ष्णिह्धातो, अञ्चुधातो, युज्धातो, क्रुञ्च्धातोश्चेत्यर्थ । ननु ऋत्विक्, दधृक्, इत्यादौ कुत्वद्वित्वादि कुत इत्यत आह । **अलाक्षणिकमपीति** ॥ लक्षणानि सूत्राणि, तद्विहित कार्यं लाक्षणिकम् । सूत्रत प्रत्यक्षानुपदिष्टमपि कार्यं निपातनात् सिद्धरूपनिर्देशात् लभ्यत इत्यर्थ । तत्र ऋतावुपपदे यजे क्विन् । तस्य कित्त्वात् 'वचिस्वपियजादीनाम्' इति सम्प्रसारण 'व्रश्च' इति षत्वापवाद कुत्वञ्च । धृषे क्विनि द्वित्वमन्तोदात्तत्वञ्च । सृजे कर्मणि क्विन् । अमागमाश्च । दिशे कर्मणि क्विन् । उत्पूर्वात् स्निहे क्विन्, उदो दलोपष्षत्वञ्च । अञ्चेस्सुप्युपपदे क्विन् । युजे केवलात् क्विन् नलोपाभावश्च निपात्यते । यद्यपि अञ्चे केवलस्यैवोपादानम् । तथाप्युष्णिक्शब्दसाहचर्यात् सोपपदस्यैवाञ्चेर्ग्रहणमित्याहु । निरुपपदात् क्विन् । विधिफल हि नुमो नस्य कुत्वमेव नुम् च असमास एव वक्ष्यते । समासे तु सुयुगित्यादौ जस्य 'चो कु' इति कुत्वेनैव सिद्धतया क्विनि क्विपि च विशेषाभावादिति भाव । **कनावितावििति** ॥ लशक्वतद्धित इति हलन्त्यमिति

## ३७४ । कृदतिङ् । (३-१-९३)

सन्निहिते धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ।

## ३७५ । वेरपृक्तस्य । (६-१-६७)

अपृक्तस्य वस्य लोपः स्यात् । 'कृत्तद्धित—' (सू १७९) इति प्रातिपदिकत्वात्स्वादयः ।

## ३७६ । युजेरसमासे । (७-१-७१)

युजेस्सर्वनामस्थाने नुम्स्यादसमासे । सुलोपः 'संयोगान्तलोपः' (सू ५४) ।

## ३७७ । क्विन्प्रत्ययस्य कुः । (८-२-६२)

क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात्पदान्ते । नस्य कुत्वेनानु-

---

च सूत्राभ्यामिति शेषः । वकारादिकारस्तु उच्चारणार्थः । अथ क्विन्नन्तस्य 'कृत्तद्धित' इति प्रातिपदिकत्वं वक्तुं क्विनः कृत्संज्ञां दर्शयति । **कृदतिङ्** ॥ धातोरित्यधिकृतम् । प्रत्यय इति च विहितः प्रत्यय इति लभ्यते । तदाह । **सन्निहिते धात्वधिकारे इति** ॥ धातोरिति विहितविशेषणम् । धातोरित्यधिकृत्य विहित इति यावत् । तेन णिजादिनिरासः । युज् व् इति स्थिते । **वेरपृक्तस्य** ॥ 'लोपो व्योः' इत्यतः लोप इत्यनुवर्तते । उत्सृष्टानुबन्धास्सर्वे क्विबादयो वेरित्यनेन गृह्यन्ते । उकारः उच्चारणार्थः । अपृक्तग्रहणात् । तदाह । **अपृक्तस्य वस्येति** ॥ अपृक्तस्येति किम् । जागृविः । क्विनः । कृत्संज्ञायाः प्रयोजनमाह । **कृत्तद्धितेति** ॥ **युजेरसमासे** ॥ उगिदचामित्यतः सर्वनामस्थान इत्यनुवर्तते । 'इदितो नुम् धातोः' इत्यतो नुमिति च । तदाह । **नुम्स्यादित्यादिना** ॥ युन् ज् इति स्थिते प्रक्रियां दर्शयति । **सुलोपः इति** ॥ परत्वात्पूर्वं नुमिततो हल्ङ्यादिलोप इति भावः । **संयोगान्तलोप इति** ॥ जकारस्येति शेषः । **क्विन्प्रत्ययस्य कुः** ॥ पदस्य इत्यधिकृतम् । 'झलाञ्जशोऽन्ते' इत्यतः अन्त इत्यनुवर्तते । क्विन् प्रत्ययो यस्मात् स क्विन्प्रत्ययः तस्येति बहुव्रीहिः । क्विन्नन्तस्येति तु नार्थः । तथासति क्विनः कुरित्येव ब्रूयात् । प्रत्ययग्रहणपरिभाषया क्विन्नन्तस्येत्यर्थलाभात् । तदाह । **क्विन्प्रत्ययो यस्मादित्यादिना** ॥ बहुव्रीहेः प्रयोजनन्तु घृतस्पृक्शब्दनिरूपणे मूल एव वक्ष्यते । कुरिति कवर्गो गृह्यते । उदित्त्वात् अणुदित्सूत्रे अप्रत्यय इत्येतत् अणैव सम्बध्यते । नतु उदिता । उदित्करणसामर्थ्यात् । तेन कुरिति विधीयमानोपि सवर्णग्राहकः । ननु नकारस्य कुत्वे कखगघङा पञ्चापि पर्यायेण प्राप्नुयुः । स्थानत आन्तर्यस्य पञ्चस्वप्यभावात् । स्पृष्टप्रयत्नत आन्तर्यस्य पञ्चस्वप्यविशिष्टत्वात् घोषसम्वारनादवता अल्पप्राणवताच्च । नकारेण गकारस्यापि आन्तर्यसत्वात् । अत आह । **नस्येति** ॥ नासिकास्थानत

नासिको ञकारः। युञ्। 'नश्चापदान्तस्य—' (सू १२३) इति नुमोऽनुस्वार, परसवर्ण.। तस्यासिद्धत्वात् 'चोः कु.' (सू ३७८) इति कुत्वं न। युञ्जौ, युञ्ज.। युञ्जम्, युञ्जौ, युज। युजा। युग्भ्याम् इत्यादि। 'असमासे' किम्।

## ३७८। चोः कुः। (८-२-३०)

चवर्गस्य कवर्गः स्याज्झलि पदान्ते च। इति कुत्वम्। क्विन्प्रत्ययस्य—' (सू ३७७) इति कुत्वस्यासिद्धत्वात्। सुयुक्-सुयुग्, सुयुजौ, सुयुज.। 'युजे' इति धातुपाठपठितेकारविशिष्टस्यानुकरणम्, न त्विका नि-

---

आन्तर्यादिति भाव। **युङिति** ॥ युजिर्योगे। रुधादि। युनक्तीति युङ्। नुमि कृते तदीयनकारस्य 'चो कु' इति कुत्व न प्राप्नोतीति क्विन्प्रत्ययस्येत्यारम्भ। अथ औजसादिषु विशेषमाह। **नश्चेति** ॥ **नुमः इति** ॥ 'युजेरसमासे' इति विहितस्येति शेष। **परसवर्णः इति** ॥ 'अनुस्वारस्य ययि' इति परसवर्णो ञकार। नासिकास्थानत आन्तर्यादिति भाव। तेन युञ्जावित्यादि सिद्धम्। नन्विह ञकारस्य झलि जकारे परे 'चो कु' इति कुत्व कुतो न स्यादित्यत आह। **तस्येति** ॥ परसवर्णस्येत्यर्थ। **युग्भ्यामिति** ॥ 'स्वादिषु' इति पदत्वाज्जकारस्य गकार इति भाव। युक्षु। असमास इत्यस्य व्यावर्त्य सुयुज्शब्द कथयिष्यन् तत्र विशेषमाह। **चोः कुः** ॥ 'झलो झलि' इत्यतो झलीत्यनुवर्तते। पदस्येत्यधिकृतम्। 'स्कोस्सयोगाद्यो' इत्यतोऽन्ते इत्यनुवर्तते। तदाह। **चवर्गस्येति** ॥ ननु 'चो' इत्यत्र उकारस्य उपदेशाभावात् इत्त्वाभावेन उदित्त्वाभावात् कथमिह सवर्णग्रहणमिति चेत्, चो इत्युकारान्तग्रहणसामर्थ्यादेव तत्र उकारस्य इत्त्वाभ्यनुज्ञानात्। अन्यथा 'च कु' इत्येव ब्रूयात् इति। **कुत्वमिति** ॥ सुयुज्शब्दे जकारस्य कुत्व गकार। घोषसवारनादाल्पप्राणसाम्यात् यथासङ्ख्यसूत्राच्चेति भाव। नन्विह 'क्विन्प्रत्ययस्य' इत्येव कुत्व कुतो न स्यात्। यद्यपि सुपूर्वाद्युजे 'सत्सूद्विष' इत्यादिना क्विपि उपपदसमासे सुयुज्शब्द न क्विन्नन्तोऽयम्। निरुपपदाद्युजे क्विन्निति अनुपदमेवोक्तत्वात्। तथापि क्विन् प्रत्ययो यस्मात् इति बहुव्रीह्याश्रयणात् सम्प्रति क्विबन्तत्वेऽपि अनेनैव कुत्वमित्यत आह। **क्विन्प्रत्ययस्येति कुत्वस्यासिद्धत्वादिति** ॥ तथाचात्र 'चो कु' इत्येव न्याय्यमिति भाव। **सुयुक्-सुयुगिति** ॥ 'वावसाने' इति चर्त्वविकल्प। ननु युक् इत्यपि रूपमिष्ट कथ सिद्ध्येत्। क्विनि नुमि युङित्येवापत्ते। नच 'ऋत्विक्' इत्यादिसूत्रे 'युजेरसमासे' इति सूत्रे च युजीति इकारविशिष्टस्यैव निर्देशात् 'युज समाधौ' इति दैवादिकस्य अकारान्तस्याग्रहणात् तत क्विप् च, इति क्विपि नुमभावे कुत्वे युक् इति सिद्ध्यतीति वाच्यम्। 'इक्श्तिपौ धातुनिर्देशे' इति इक्प्रत्ययान्तस्य उभयत्रापि सम्भवेन उभाभ्या क्विनि नुमि युङित्येवापत्तेरित्यत आह। **युजेरिति** ॥ उपलक्षणमेतत्। 'युजेरसमासे' इति सूत्रे युजीति ऋत्विगादिसूत्रे युजीति च धातुपाठे 'युजिर् योगे' इति इकारविशिष्ट य पठितः तस्यैव रेफशि-

देश । तेनेह न । युज्यते समाधत्ते इति युक् । 'युज समाधौ' दैवादिक आत्मनेपदी । संयोगान्तलोप । खन्, खञ्जौ, खञ्ज, इत्यादि । 'व्रश्च—' (सू २९४) इति षत्वम् । जश्त्वचर्त्वे राट्—राड्, राजौ, राज । राट्त्सु—राट्सु । एव विभ्राट् । देवेट्, देवेजौ, देवेज । विश्वसृट्—विश्वसृड्, विश्वसृजौ, विश्वसृज. । इह सृजियज्यो: कुत्वं नेति क्लीबे वक्ष्यते । परिमृट् । षत्वविधौ राजिसाहचर्यात् 'टु भ्राजृ दीप्तौ' इति फणादि-रेव गृह्यते । यस्तु 'एजृ भ्रेजृ भ्राजृ दीप्तौ' इति तस्य कुत्वमेव । विभ्राक्—विभ्राग् । विभ्राग्भ्याम् इत्यादि । 'परौ व्रजे. ष पदान्ते' (उ २१७) । परावुपपदे व्रजे क्विप्स्याद्दीर्घश्च पदान्तविषये षत्वं च । परित्यज्य सर्वं व्रजतीति परिव्राट्, परिव्राजौ, परिव्राज ।

रस्कनया ग्रहणम् । नत्विका निर्देश । व्याख्यानादित्यर्थ । तत किमित्यत आह । **तेनेति** ॥ 'खजि गतिवैक्लव्ये' । क्विप्, इदित्त्वान्नुम् । 'नश्चापदान्तस्य' इत्यनुस्वार , परसवर्णो ञकार । खञ्ज्शब्द । तस्य विशेषमाह । **संयोगान्तेति** ॥ हल्ङ्यादिना सुलोपे जकारस्य सयोगान्त-लोप । ततो निमित्तापायात् अनुस्वारपरसवर्णयोर्निवृत्ति । खन् इति रूपमित्यर्थ । 'अनिदि-ताम्' इति नलोपस्तु न। इदित्त्वात् । 'राजृ दीप्तौ' इत्यस्मात् क्विपि राज्शब्द । तस्य विशेषमाह । **व्रश्चेति** ॥ हल्ङ्यादिना सुलोपे 'व्रश्च' इति षत्वम् । जश्त्वेन डकार । 'वावसाने' इति चर्त्ववि-कल्प । भ्यामादौ 'स्वादिषु' इति पदान्तत्वात् षत्व जश्त्वञ्च । राड्भ्यामित्यादि। 'ड:सि धुट्' इति विकल्पम्मत्वा आह । **राट्त्सु—राट्स्विति** ॥ **एवं विभ्राडिति** ॥ राज्शब्दवत् षत्वादीत्यर्थ । 'टु भ्राजृ दीप्तौ' क्विप् । विशिष्य भ्राजत इति विभ्राट् । देवान् यजत इति विग्रहे क्विपि यजादित्वात् 'वचिस्वपि' इति सम्प्रसारणम् । आद्गुण । **विश्वसृडिति** ॥ 'सृज विसर्गे' क्विपि 'व्रश्च' इति षत्वादि । ननु क्विबन्तेऽपि देवेज्शब्दे विश्वसृज्शब्दे च क्विन् प्रत्ययो यस्मा-दिति बहुव्रीह्याश्रयणादृत्विक्शब्दवत् कुत्व कुतो न स्यादित्यत आह । **इहेति** ॥ 'सृजिदृशो.' इति सूत्रे काम्यच्सूत्रे च विश्वसृड्भ्यामिति उपयट्काम्यतीति च भाष्यप्रयोगात् 'क्विन्प्रत्यय स्य' इति कुत्वन्नेत्यर्थ । **परिमृडिति** ॥ 'मृजू शुद्धौ' क्विप् । 'क्ङिति च' इति निषेधात् 'मृजेर्वृद्धि' इति न भवति। 'व्रश्च' इति षत्वम् । परिमार्ष्टीति परिमृट् । अथ विभ्रागिति कुत्व साधयितु माह । **षत्वविधाविति** ॥ व्रश्चादिसूत्रे इत्यर्थ । अथ परिव्राज्शब्द व्युत्पादयति । **परौ व्रजे.** ॥ औणादिकसूत्रमेतत् । 'क्विब्वचिप्रच्छि' इत्यादिपूर्वसूत्रात् क्विबिति दीर्घ इति चानु-वर्तते । पदान्त इति ष इत्यनेनैव सम्बध्यते । नतु क्विब्दीर्घाभ्यामपि, व्याख्यानात् । तदाह । **परावुपपदे इत्यादिना** ॥ **षत्वञ्चेति** ॥ 'चो कु' इत्यस्यापवाद इति भाव. । विश्वस्मिन् राजते इत्यर्थे 'सत्सूद्विष' इत्यादिना क्विपि उपपदसमासे विश्वराज्शब्द ।

## ३७९। विश्वस्य वसुराटोः। (६-३-१२८)

विश्वशब्दस्य दीर्घोऽन्तादेश स्याद्वसौ राट्शब्दे च परे। विश्वं वसु यस्य स विश्वावसु। राडिति पदान्तोपलक्षणार्थम्। चर्त्वमविवक्षितम्। विश्वाराट्-विश्वाराड्, विश्वराजौ, विश्वराज। विश्वाराड्भ्याम् इत्यादि।

## ३८०। स्कोः संयोगाद्योरन्ते च। (८-२-२९)

पदान्ते झलि च परे य संयोगस्तदाद्यो सकारककारयोर्लोप स्यात्। भृट्-भृड्। सस्य श्चुत्वेन श. । तस्य जश्त्वेन ज। भृज्जौ, भृज्ज।

तस्य विशेषमाह। **विश्वस्य वसुराटोः॥** 'ढ्लोपे' इत्यतो दीर्घ इत्यनुवर्तते। तदाह। **विश्व-शब्दस्येति॥ विश्व वस्विति॥** "वसुर्मयूखेऽग्नौ योक्त्रेऽशौ वसु तोये धने मणौ" इति कोश। विश्वावसुरित्युदाहरण प्रासङ्गिकम्। "आदित्यविश्ववसव" इत्यमरप्रयोगे तु न दीर्घ। 'नरे सञ्ज्ञायाम्' इत्यतस्सञ्ज्ञाग्रहणापकर्षात्। ननु राट्शब्दस्य कृतचर्त्वस्य निर्देशात् जश्त्वे सति दीर्घो न स्यादित्यत आह। **राडिति॥ अविवक्षितमिति॥** व्याख्यानादिति भाव। **विश्वाराट्-विश्वाराडिति॥** 'व्रश्च' इति षत्वम्। जश्त्वचर्त्वे। चर्त्वनिर्देशस्य पदान्तोपलक्षणत्वात् जश्त्वपक्षेऽपि दीर्घ। यद्यपि त्रैपादिक 'व्रश्च' इति षत्व 'चो कु' इति कुत्वात्परम्। तथापि चवर्गान्तव्रश्चादिविषये षत्वमपवादत्वान्नासिद्धम्। 'अपवादो वचनप्रामाण्यात्' इति। **विश्वराजाविति॥** अपदान्तत्वान्न दीर्घ इति भाव। 'भ्रस्ज पाके' क्विप्। 'ग्रहिज्या' इति सम्प्रसारणम्। रेफस्य ऋकार। 'सम्प्रसारणाच्च' इति पूर्वरूपम्। भ्रस्ज्शब्द। ततस्सुबुत्पत्ति। तत्र विशेषमाह। **स्कोः संयोग॥** पदस्येत्यधिकृतम्। चकारात् 'झलो झलि' इत्यतो झलीत्यनुवर्तते। पदस्यान्ते इति झलीति च संयोगेत्यनेन सम्बध्यते। संयोगेति लुप्तषष्ठीक पृथक्पदम्। स् च क् च स्कौ, तयोरिति विग्रह। 'संयोगान्तस्य लोप' इत्यतो लोप इत्यनुवर्तते। तदाह। **पदान्ते इत्यादिना॥** अत्र काष्ठशक् स्थातेत्यत्र झल्परसंयोगादित्वात् ककारस्य लोपप्राप्तौ तन्निवृत्त्यर्थं वार्तिक पठितम्। झलीत्यपहाय सडीति वक्तव्यमिति। सनस्सकारमारभ्य महिङो ङकारेण प्रत्याहार। तदिद वार्तिक भाष्ये प्रत्याख्यातम् "काष्ठशगेव नास्ति कुत काष्ठशक् स्थाता" इति। ककारान्तेभ्यो नास्ति क्विप्। अनभिधानादित्याशय। नच पृथक्स्थातेत्यत्र ककारस्य लोपनिवृत्तये 'सडि' इति वार्तिकमावश्यकमिति वाच्यम्। "तत्प्रत्याख्यानपरभाष्यप्रामाण्यादेवञ्जातीयकसंयोगादिलोपप्राप्तियोग्योदाहरणानामप्रयोगावगमात्" इति शब्देन्दुशेखरे स्पष्टम्। **भृट्-भृडिति॥** भ्रस्ज् स् इति स्थिते हल्ङ्यादिलोपे 'स्को' इति सकारलोपे जकारस्य व्रश्चादिना षत्वे जश्त्वचर्त्वे इति भाव। यद्यपि जकारस्य संयोगान्तलोपेऽपि सकारस्य 'व्रश्च' इति षत्वे जश्त्वचर्त्वयो भृट्-भृड् इति सिध्यति। तथापि न्याय्यत्वादिह संयोगादिलोप एव भवति। **सस्येति॥** भ्रस्ज् औ

'ऋत्विग्—' (सू ३७३) इत्यादिना ऋतावुपपदे यजे. क्विन् । क्विन्नन्तत्वात्कुत्वम् । ऋत्विक्—ऋत्विग्, ऋत्विजौ, ऋत्विज । 'रात्सस्य' (सू २८०) इति नियमान्न संयोगान्तलोप । ऊर्क्—ऊर्ग्, ऊर्जौ, ऊर्ज ।

इति जान्ता ।

---

## ॥ अथ हलन्तपुल्लिङ्गे दकारान्तप्रकरणम् ॥

त्यदाद्यत्व पररूपत्वं च ।

### ३८१ । तदोः सः सावनन्त्ययोः । (७-२-१०६)

---

इत्यादावपि पदान्तझल्परसयोगादित्वाभावान्न सयोगादिलोप । 'झलाजश् झशि' इति जश्त्वस्यासिद्धत्वात् सकारस्य श्चुत्वमिति भाव । **तस्येति** ॥ शकारस्येत्यर्थ । तालुस्थानकत्वात् शकारस्य जकार । नच जश्त्वस्यासिद्धत्वात् शकारस्य व्रश्चेति षत्व शङ्क्यम् । षत्व प्रति श्चुत्वस्यासिद्धत्वात् । भ्यामादौ तु 'स्वादिषु' इति पदान्तत्वात् सयोगादिलोप । व्रश्चेति षत्व जश्त्वञ्च । भृड्भ्यामित्यादि । **ऋत्विगित्यादिनेति** ॥ 'ऋ गतौ' औणादिकस्तु । ऋतु गमन प्राप्ति, दक्षिणाद्रव्यलाभो विवक्षित । तस्मिन्निमित्ते यजन्ति यज्ञियव्यापार कुर्वन्तीत्यर्थे ऋतावुपपदे यजधातो क्विन् 'वचिस्वपि' इति यकारस्य सम्प्रसारणमिकार । पूर्वरूपम् । यणादेशश्च । ऋत्विज् इति रूपम् । ततस्सोर्हल्ङ्यादिलोप । एतावत् सिद्धवत्कृत्य आह । **क्विन्नन्तत्वात्कुत्वमिति** ॥ क्विन्प्रत्ययस्येत्यनेनेति शेष । एतदर्थमेव क्विन्विधानमिति भाव । नच क्विपि 'चो कु' इति कुत्वेनैवैतत् सिध्यतीति वाच्यम् । 'चो कु' इति कुत्व हि 'व्रश्च' इति षत्वेन अपवादत्वात् बाध्येत । क्विन्प्रत्ययस्येति कुत्वन्तु क्विन्विधिसामर्थ्यादेव न बाध्यते । यष्टेत्यादौ षविधेश्चरितार्थत्वादिति भाव । **ऊर्क्-ऊर्ग् इति** ॥ 'ऊर्ज बलप्राणनयो' चुरादिण्यन्तात् 'भ्राजभास' इत्यादिना क्विप्, णिलोप । ऊर्ज् इति रूपम् । ततस्सोर्हल्ङ्यादिलोप । 'चो कु' इति जस्य कुत्व गकार । 'वावसाने' इति चर्त्वविकल्प । नच कुत्वे कर्तव्ये णिलोपस्य स्थानिवत्त्व शङ्क्यम् । पदान्तविधौ तन्निषेधात् । 'पूर्वत्रासिद्धीये न स्थानिवत्' इति वचनाच्च ॥

इति जान्ता ।

---

अथ दकारान्ता निरूप्यन्ते । त्यद्शब्दस्तद्शब्दपर्याय । तस्य विशेषमाह । **त्यदाद्यत्वं पररूपत्वमिति** ॥ सर्वत्र विभक्तावुत्पन्नायां 'त्यदादीनाम्' इति दकारस्यान्त्यस्य अकार 'अतो गुणे' इति पररूपञ्चेत्यर्थ । ततश्च अदन्तवद्रूपाणीति भाव । त्य स् इति स्थिते । **तदोः सः सावनन्त्ययोः ॥ त्यदादीनामिति** ॥ 'त्यदादीनाम' इत्यतस्तदनुवृत्तेरिति

त्यदादीनां तकारदकारयोरनन्त्ययो स स्यात्सौ परे । स्य । त्यौ । त्ये । त्यम्, त्यौ, त्यान । स, तौ, ते । परमस, परमतौ, परमते । द्विपर्यन्तानामित्येव। नेह । त्वम् । न च तकारोच्चारणसामर्थ्यान्नेति वाच्यम् । अतित्वमिति गौणे चरितार्थत्वात् । संज्ञाया गौणत्वे चात्वसत्वे न । त्यद्, त्यदौ, त्यद । अतित्यद्, अतित्यदौ, अतित्यद । य, यौ, ये । एष., एतौ, एते । अन्वादेशे तु एनम्, एनौ, एनान् । एनेन। एनयो । एनयो ।

## ३८२ । ङे प्रथमयोरम् । (७-१-२८)

युष्मदस्मद्भ्या परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेश. स्यात् ।

---

भाव । **तकारदकारयोरिति** ॥ सूत्रे तश्च द् चेति विग्रह । तकारादकार उच्चारणार्थ इति भाव । **सः स्यादिति** ॥ आदेशेऽपि अकार उच्चारणार्थ । **स्यौ इति** ॥ सावित्युक्तेर्न सत्व मिति भाव । **त्ये इति** ॥ सर्वनामत्वात् जसश्शीभाव इति भाव । स्मायादीनामप्युपलक्षणम् । त्यम्, त्यौ, त्यान् । त्येन, त्याभ्याम्, त्यै । त्यस्मै, त्याभ्याम्, त्येभ्य । त्यस्मात् । त्यस्य, त्ययो, त्येषाम् । त्यस्मिन्, त्येषु । एव तद्शब्द । **परमसः इति** ॥ अत्वादीनामाङ्गत्वात्तदन्तेऽपि प्रवृत्तेरिति भाव । ननु युष्मच्छब्दस्यापि त्यदादित्वात्तस्यापि प्रथमैकवचने त्वमित्यत्र 'तदोस्सस्सौ' इति सत्व कुतो न स्यादित्यत आह । **द्विपर्यन्तेति** ॥ 'त्यदादीनाम' इत्यत्र पठित 'द्विपर्यन्तानामेवेष्यते' इति वार्तिक 'तदोस्सस्सौ' इत्यत्राप्यनुवर्तत एवेत्यर्थ । तत किमित्यत आह । **नेहेति** ॥ इहशब्दविवक्षितमाह । **त्वमिति** ॥ युष्मच्छब्दस्य द्विशब्दादुपर्येव सर्वादिगणे पाठादिति भाव । ननु 'त्वाहौ सौ' इति तकारोच्चारणसामर्थ्यादेव त्वमित्यत्र सत्वन्न भवति । अन्यथा स्वाहौ सौ, इत्येव ब्रूयात् । अतो द्विपर्यन्तानामित्यनुवृत्तिरिह व्यर्थेत्याशङ्क्य निराकरोति । **न चेति** ॥ तकारोच्चारणसामर्थ्यादिह सत्वन्नेति न वाच्यमित्यन्वय । **अतित्वमिति** ॥ द्विपर्यन्तानामित्यननुवृत्तौ त्वमित्यत्रापि सत्व स्यात् । नच 'त्वाहौ सौ' इति तकारोच्चारणानर्थक्यम् । त्वामतिक्रान्त अतित्वमिति गौणे युष्मच्छब्दस्य त्वादेशे त्वाहाविति तकारोच्चारणस्य लब्धप्रयोजनत्वादित्यर्थ । न च अतित्वमित्यत्रापि सत्वप्रवृत्तेर्दुर्वारत्वात् त्वाहाविति तकारेणोच्चारणानर्थक्य दुर्वारमिति वाच्यम् । सत्वस्य सर्वाद्यन्तर्गणकार्यत्वेन गौणे तस्याऽप्रवृत्ते । अत एवाह । **संज्ञायामिति** ॥ **त्यदिति** ॥ कस्यचिन्नामेदम् । **अतित्यदिति** ॥ त्यमतिक्रान्त इति विग्रह । **यः इति** ॥ यद्शब्दस्य त्यदाद्यत्वे पररूपत्वे सर्वशब्दवद्रूपाणि । तकाराभावान्न सत्वम् । **एषः इति** ॥ एतद्शब्दस्य त्यदाद्यत्वे पररूपत्वे सर्ववदेव रूपाणि । सौ तु तकारस्य सत्वमिति विशेष । **अन्वादेशे त्विति** ॥ 'द्वितीयाटौस्स्वेन' इत्यस्य एतद्शब्देऽपि प्रवृत्तेरिति भाव । अथ युष्मदस्मद्शब्दयो प्रक्रिया दर्शयति । **ङे प्रथमयोरम्** ॥ 'युष्मदस्मद्भ्या ङसोऽश्' इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते । परशब्दोऽध्याहर्तव्य । ङे इति लुप्तषष्ठीक पृथक्पदम् । प्रथमयोरिति

## ३८३ । मपर्यन्तस्य । (७-२-९१)

इत्यधिकृत्य ।

## ३८४ । त्वाहौ सौ । (७-२-९४)

युष्मदस्मदोर्मपर्यन्तस्य त्व अह इत्येतावादेशौ स्त सौ परे ।

## ३८५ । शेषे लोपः । (७-२-९०)

आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लोप स्यात् । 'अतो गुणे' (सू १९१) । 'अमि पूर्वे' (सू १९४) त्वम् । अहम् । ननु 'त्वम् स्त्री' 'अहम् स्त्री' इत्यत्र 'त्व अम्' 'अह अम्' इति स्थिते अमि पूर्वरूप परमपि बाधित्वान्तरङ्गत्वाट्टाप् प्राप्नोति । सत्यम् । अलिङ्गे युष्मदस्मदी । तेन स्त्रीत्वाभावान्न टाप् । यद्वा शेष इति सप्तमी स्थानिनोऽधिकर-

---

प्रथमाद्वितीयाविभक्त्योर्लाक्षणिकामिति भाष्यम् । तदाह । **युष्मदस्मद्भ्यामित्यादिना** ॥ सोरमादेशे कृते 'न विभक्तौ' इति मस्य नेत्त्वन् । युष्मद् अम् अस्मद् अम इति स्थितम् । **अधिकृत्येति** ॥ कार्याणि वक्ष्यन्ते इति शेष । **त्वाहौ सौ** ॥ त्वश्च अहश्च त्वाहौ । मपर्यन्तस्येत्यधिकृतम् । 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोरित्यनुवर्तते । तदाह । **युष्मदस्मदोरित्यादिना** ॥ त्व अद् अम् अह अद् अम् इति स्थितम् । यद्यप्यत्र 'त्वमावेकवचने' इत्येव युष्मद्शब्दस्य त्वादेशस्सिद्ध । तथापि युष्मानतिक्रान्त अतित्वमित्यत्र त्वादेशार्थमिह युष्मदस्मद्विधानम् । नहि तत्र 'त्वमावेकवचने' इत्यस्य प्रवृत्तिरस्ति । अत्र युष्मद्शब्दस्य बहुत्वविशिष्टे वृत्ते । एकवचनशब्दो हि तत्र एकत्वविशिष्टवृत्तिवाची । ननु एकवचनसञ्ज्ञकप्रत्ययवाचीत्यनुपदमेव वक्ष्यते । **शेषे लोपः** ॥ 'अष्टन आ विभक्तौ' इत्यत आ इत्यनुवर्तते । विभक्तावित्यनुवृत्त शेष इत्यनेनान्वेति । 'युष्मदस्मदोरनादेशे, द्वितीयायाञ्च, प्रथमायाश्च द्विवचने भाषाया, 'योऽचि' इत्यात्वयत्वयो प्रागुक्तत्वात्तद्विषयातिरिक्तविभक्तिरिह शेषशब्दार्थ । युष्मदस्मदोरिति चानुवृत्तम् । तदाह । **आत्वयत्वेति** ॥ अन्त्यस्येत्यलोऽन्त्यपरिभाषालभ्यम् । शेषग्रहणमिह विभक्तिविशेषण स्पष्टार्थमेव । "विशेषविहिताभ्यामात्व यत्वाभ्या स्वविषये बाधसम्भवात्" इति प्रकृतसूत्रे 'युष्मदस्मद्भ्या ङसोऽश्' इति सूत्रे च भाष्यकैयटयो स्पष्टम् । **अतो गुणे इति** ॥ पूर्वयोरकारयो पररूपमिति भाव । त्व अम्, अह अम्, इत्यत्र पूर्वसवर्णदीर्घमाशङ्क्य आह । **अमि पूर्वः इति** ॥ अत्र शङ्कते । **नन्विति** ॥ "ननु चस्याद्विरोधोक्तौ" इत्यमर । शङ्कायामिति यावत् । **अन्तरङ्गत्वादिति** ॥ 'अजायत' इति टाप परनिमित्तानपेक्षतया पररूपादन्तरङ्गत्व बोध्यम् । अर्धाङ्गीकारेण परिहरति । **सत्यमिति** ॥ पररूपादन्तरङ्गष्टाबित्यङ्गीक्रियते । इह प्रवृत्तिस्तु तस्य नाङ्गीक्रियत इत्यर्थः । **अलिङ्गे युष्मदस्मदी इति** ॥ 'साम आकम्' इति सूत्रे भाष्ये पठितमेतत् । युष्मदस्मदी

णत्वविवक्षया । तेन मपर्यन्ताच्छेषस्य 'अद्' इत्यस्य लोप स्यात् । स च परो ऽप्यन्तरङ्गे अतो गुणे कृते प्रवर्तते । अदन्तत्वाभावान्न टाप् । परमत्वम् । परमाहम् । अतित्वम् । अत्यहम् ।

## ३८६ । युवावौ द्विवचने । (७-२-९२)

इति शब्दस्वरूपपरत्वान्नपुसके । शब्दस्वरूपपरत्वादेव च 'त्यदादीनि सर्वैर्नित्यम्' इत्येक शेषोऽपि न । अत एव भाष्यप्रयोगात् । **तेनेति** ॥ अलिङ्गत्वेनेत्यर्थ । ननु 'ङे प्रथमयो' इति सूत्रे भाष्ये पुसि युष्मानस्मानित्यत्र 'तस्माच्छसो न पुसि' इति नत्वस्य सिद्धत्वात् 'शसो न' इति नत्वविधिवैयर्थ्यमाशङ्क्य स्त्रियान्नपुसके च युष्मान् ब्राह्मणी पश्य, अस्मान् ब्राह्मणी पश्य, युष्मान् ब्राह्मणकुलानि पश्य, अस्मान् ब्राह्मणकुलानि पश्य, इत्यत्र नत्वार्थ 'शसो न' इति नत्वविधानमित्यादि स्थितम् । किञ्च स्वमोर्नपुसकादित्यधिकारे 'नेतराच्छन्दसि' इति सूत्रे "नपुसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन" इति वार्तिकतद्भाष्ययो शिर्शालुङ्लुग्भिर्नपुसकाविहितैस्त्वाहादियुष्मदस्मदादेशाना विप्रतिषेध उपन्यस्त । अत युष्मदस्मदोरलिङ्गत्वमनुपपन्नम् । 'साम आकम्' इति सूत्रे "अलिङ्गे युष्मदस्मदी" इति भाष्यन्तु "पुस्त्रीनपुसकलिङ्गपदान्तरसमभिव्याहार विना लिङ्गविशेषो युष्मदस्मच्छब्दाभ्यान्न प्रतीयते इत्येवम्परम्" इति तत्रैव भाष्ये स्पष्टम् । एवञ्च युष्मदस्मदोस्त्रीलिङ्गमत्वात् टाप् दुर्वार इत्यस्वरसादाह । **यद्वेति** ॥ **अधिकरणत्वविवक्षयेति** ॥ 'विवक्षात कारकाणि भवन्ति' इति वक्ष्यमाणत्वादिति भाव । यदि हि शेषे इति विभक्तिविशेषण स्यात् तर्हि व्यर्थमेव स्यात् । आत्वयत्वाभ्या विशेषविहिताभ्या स्वविषये लोपस्य बाधसम्भवात् । अत शेषस्येत्यर्थ आस्थेय । तत किमित्यत आह । **तेनेति** ॥ शेषस्य स्थाने इत्यर्थाश्रयणेनेत्यर्थ । **मपर्यन्तादिति** ॥ मपर्यन्तस्येत्यपकृष्ट पञ्चम्यन्ततया विपरिणम्यत इति भाव । एतच्च 'त्यदादीनाम' इति सूत्रे 'टिलोपष्टाबभावार्थं कर्तव्य इति स स्मृत । अथवा शेषसप्तम्या शेषे लोपो विधीयत' इति वार्तिकतद्भाष्ययो स्पष्टम् । नच मपर्यन्तस्य त्व इति अह इति चादेशे कृते शिष्टस्य अद् इत्यस्य मपर्यन्तात्परत्वन्नास्तीति वाच्यम् । त्वाहादेशयो कृतयो. अदो लोपप्रवृत्तिवेळाया मपर्यन्ताच्छेषत्वाभावेऽपि त्वाहादेशप्रवृत्ते पूर्वकालिकपर्यन्तत्वमादाय तदुपपत्ते । नन्वस्तु मपर्यन्ताच्छेषस्य अदशब्दस्य लोप । तथापि त्व अद्, अम् अह अद् अम् इति स्थिते पररूपापेक्षया परत्वाददो लोपे अदन्तत्वात् टाप् दुर्वार इत्यत आह । **स चेति** ॥ शेषे लोप, इत्यर्थ । **अन्तरङ्गे इति** ॥ 'अतो गुणे' इत्यस्य बहिर्भूतविभक्त्यपेक्षलोपापेक्षया अन्तरङ्गत्व बोध्यम् । **अदन्तत्वाभावादिति** ॥ त्व अद् अह अद् इत्यत्र पररूपे सति त्वद् अहद् इति स्थिते अदो लोपे त्व् अह् इत्यनयोरदन्तत्वाभावान्न टाबित्यर्थ । **परमत्वमिति** ॥ 'ङे प्रथमयो' इत्यादीनामाङ्गत्वात् तदन्तविधिरिति भाव । **अतित्वमिति** ॥ 'ङे प्रथमयो' इत्यादीना गौणे अप्रवृत्तौ मानाभावादिति भाव । युष्मद् औ अस्मद् औ इति स्थिते 'ङे प्रथमयो' इत्यमि कृते युष्मद् अम् अस्मद् अम् इति स्थिते । **युवावौ द्विवचने** ॥ 'युष्मदस्मदोरनादेशे' इत्यतो

**द्वयोरुक्तौ युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ।**

**३८७ । प्रथमायाश्च द्विवचने भाषायाम् । (७-२-८८)**

**इह युष्मदस्मदोराकारोऽन्तादेश स्यात् । युवाम् । आवाम् । 'औङि' इत्येव सुवचम् । 'भाषायाम्' किम् । युवं वस्त्राणि । मपर्यन्तस्य (सू ३८३) किम् । साकच्कस्य मा भूत् । युवकाम् । आवकाम् । 'त्वया' 'मया' इत्यत्र 'त्व्या' 'म्या' इति मा भूत् । 'युवकाभ्याम्' 'आवकाभ्याम्' इति च न सिध्येत् ।**

---

युष्मदस्मदोरित्यनुवर्तते । मपर्यन्तस्येत्यधिकृतम् । उक्तिर्वचनम् । द्वयो वचन द्विवचनम् । तत्र समर्थयोरित्यर्थ । द्वित्वविशिष्टार्थवाचिनोरिति यावत् । ननु द्विवचनसञ्ज्ञके प्रत्यये परे इत्यर्थ । वचनग्रहणसामर्थ्यात् । अन्यथा द्वित्वे इत्येव ब्रूयात् । 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यनुवृत्तौ सत्या द्वित्वे या विभक्तिस्तस्या परत इत्यर्थलाभात् । तदाह । **द्वयोरुक्ता-वित्यादिना ॥** द्वयोरुक्तावित्याश्रयणस्य फलमग्रे मूल एव स्पष्टीभविष्यति । युव अद् आव अद् इति स्थिते 'शेषे लोप' इति प्राप्ते । **प्रथमायाश्च द्विवचने भाषायाम् ॥** 'अष्टन आ विभक्तौ' इत्यत आग्रहणमनुवर्तते । 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदो इति च । तदाह । **इहेति ॥** भाषाया प्रथमाद्विवचने परे इत्यर्थ । भाषायामित्यस्य तु लौकिक-व्यवहारे इत्यर्थ । **युवाम् । आवामिति ॥** युव अद्, अम् आव अद् अम् इत्यत्र दकारस्य आत्वे पूर्वयोरकारयो पररूपे ततस्सवर्णदीर्घे 'अमि पूर्व' इति भाव । **औङीत्येव सुवचमिति ॥** द्वितीयाद्विवचनेऽप्यात्वस्य इष्टत्वादिति भाव । **युवं वस्त्राणीति ॥** युष्मद् औ, इति स्थिते मपर्यन्तस्य युवादेशे सति शेषलोपे रूपम् । **मपर्यन्तस्य किमिति ॥** युष्मदस्मदोस्समस्तयोरेव युवावादेशयो कृतयोरपि आत्वे पूर्वरूपे च युवाम् आवामिति सिद्धेरिति प्रश्न । **साकच्कस्येति ॥** 'अव्ययसर्वनाम्नाम्' इति टे प्रागकचि युष्मकद् औ अस्मकद् औ इति स्थिते 'ङे प्रथमयो' इत्यमि 'युवावौ द्विवचने' इति समस्तयोस्साकच्क योस्तन्मध्यपतितन्यायेन युवावादेशयो 'प्रथमायाश्च' इति दकारस्य आत्वे अमि पूर्वे च युवाम् आवाम् इत्येव स्यात् । ककारो न श्रूयेत । अतो मपर्यन्तस्येति वचनमित्यर्थ । ननु समुदाया-देशत्वेऽपि 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टे प्रागकच्, अन्यत्र सुबन्तस्य टे प्राक्' इति व्यवस्थाया वक्ष्यमाणत्वाद्युवामावामिति परिनिष्ठितसुबन्तयोष्टे प्रागकचि युवकाम् आव-कामिति सिद्ध्यत्येव । अत्र साकच्कयोर्युवावादेशाप्रसक्तेरित्यस्वरसादाह । **त्वया, मयेति ॥** यदि मपर्यन्तस्येति न स्यात् तदा 'त्वमावेकवचने' इति त्वमादेशौ समस्तयोस्स्याताम् । ततश्च तृतीयैकवचने युष्मद् आ, अस्मद् आ इति स्थिते समस्तयो स्थाने त्वमादेशयो त्व आ म आ इति स्थिते 'योऽचि' इति अकारस्य यत्वे त्व्या म्या इति स्यात् । अतो 'मप-र्यन्तस्य' इति वचनम् । सति तस्मिन् मपर्यन्तस्य त्वमादेशयो कृतयो त्व अद् आ म अद् आ इति स्थिते अकारयो पररूपे दकारस्य यत्वे च त्वया मया इति सिद्ध्यतीत्यर्थ ।

## ३८८ यूयवयौ जसि। (७-२-९३)

स्पष्टम्। यूयम्। वयम्। परमयूयम्। परमवयम्। अतियूयम्। अतिवयम्। इह शेषे लोपोऽन्त्यलोप इति पक्षे जस शी प्राप्त। 'अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्' (प ९३) इति न भवति। 'ङे प्रथमयो —' (सू ३८२) इत्यत्र मकारान्तर प्रश्लिष्य 'अम् मान्त एवावशिष्यते, न तु विक्रियते' इति व्याख्यानाद्वा।

---

ननु 'योऽचि' इति सूत्रस्थाने 'अन्ये' इति सूत्रमस्तु। अजादिविभक्तौ युष्मदस्मदोरन्त्यस्य एकार स्यादिति तदर्थ। तथाच त्वमयोस्समस्तादेशत्वेऽपि तदन्त्यस्य अकारस्य एत्वे अयादेशे च कृते त्वया मयेति सिध्यतीत्यस्वरसादाह। **युवकाभ्याम्, आवकाभ्याम् इति च न सिध्येदिति** ॥ अमति मपर्यन्तवचने इति शेष। "ओकारसकार" इत्यादिवचनेन भ्यामि टे प्रागकचि तन्मध्यपतितन्यायेन साकच्कयो स्थाने युवावादेशयो युवाभ्यामावाभ्यामित्येव स्यात्। ककारो न श्रूयेत। युष्मकद् अस्मकद् इत्यत्र मपर्यन्तस्यैव युवावादेशयोस्तु 'युष्मदस्मदोरनादेशे' इत्यात्वे युवकाभ्याम् आवकाभ्यामिति निर्बाधमित्यर्थ। 'ङे प्रथमयो' इति जस अमि कृते विशेषमाह। **यूयवयौ जसि** ॥ **स्पष्टमिति** ॥ युष्मदस्मदोर्मपर्यन्तस्य यूय वय इत्यादेशौ स्तो जसि परत इति सुगममित्यर्थ। यूय अद् अम्, वय अद् अम् इति स्थिते पररूपे 'शेषे लोप' इति मपर्यन्ताच्छेषस्य अदो लोपे परिनिष्ठित रूपमाह। **यूयम्। वयमिति** ॥ **परमयूयमिति** ॥ यूयवयविधेराङ्गत्वात्तदन्तविधिरिति भाव। **अतियूयमिति** ॥ गौणत्वेऽपि तदप्रवृत्तौ मानाभावादिति भाव। अत्र शीभावमाशङ्क्य परिहरति। **इहेति** ॥ इह 'शेषे लोप' इत्यन्त्यलोप इति पक्षे दकारस्य लोपे सति अवर्णान्तात् सर्वनाम्न परत्वात् जस शीभाव प्राप्तो न भवतीत्यन्वय। कुत इत्यत आह। **अङ्गकार्ये इति** ॥ अङ्गाधिकारविहिते कार्ये कृते सति पुन अङ्गाधिकारविहित कार्यं न भवतीत्यर्थ। तेन त्वमित्यत्र पररूपे कृते 'अमि पूर्व' इत्यस्य नानुपपत्ति। 'ज्यादादीयस' इति सूत्रे 'ज्ञाजनोर्जा' इति सूत्रे च 'अङ्गवृत्ते पुनर्वृत्तावविधि' इति परिभाषा स्थिता। सा चात्र अर्थत उपनिबद्धा। नच द्वाभ्यामित्यत्र त्यदाद्यत्वे कृते 'सुपि च' इति दीर्घो न स्यादिति वाच्यम्। द्वयोरेकस्येत्यादिनिर्देशेन तदनित्यत्वज्ञापनात्। प्रकृते च शेषलोपस्य आङ्गस्य प्रवृत्तत्वादाङ्गश्शीभावो न भवतीति भाव। ननु 'अङ्गकार्ये' इति परिभाषा नात्र प्रवर्तते। शीभावस्य अङ्गाधिकारविहितत्वेऽपि अङ्गाधिकरणकत्वाभावात्। 'अङ्गवृत्ते पुनर्वृत्तावविधि' इति परिभाषास्वारस्येन तथैव प्रतीते। अतोऽत्र शीभावो दुर्वार इत्यस्वरसादाह। **ङे प्रथमयोरिति** ॥ 'ङे प्रथमयोरम्' इत्यत्र अम् म् इति मकारान्तर प्रश्लिष्यते। अम् च म् चेति द्वन्द्व। अन्त्यो मकारस्संयोगान्तलोपेन लुप्तः। प्रश्लिष्टश्च मकार अमो विशेषणम्, तदन्तविधि। मकारान्तः अम् स्यादिति लभ्यते। मकारान्तस्य अम. पुनर्मान्तत्वविधानात् अम् मान्त एव भवति। नतु तस्य विकारो भवतीति लभ्यते। अतो न शीभाव इत्यर्थ. । वस्तुतस्तु मकारान्तरप्रश्लेषो

## ३८९ । त्वमावेकवचने । (७-२-९७)

एकस्योक्तौ युस्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ।

## ३९० । द्वितीयायाञ्च । (७-२-८७)

युष्मदस्मदोराकार स्यात् । त्वाम् । माम् । युवाम् । आवाम् ।

## ३९१ । शसो न । (७-१-२९)

**नेत्यविभक्तिकं पदम्** । युष्मदस्मद्भ्या परस्य शसो नकार स्यात् । अमोऽपवाद । 'आदे परस्य' (सू ४४) । 'संयोगान्तस्य लोप' (सू ५४) । युष्मान । अस्मान् ।

---

भाष्ये अदर्शनादुपेक्ष्य । सन्निपातपरिभाषयैवात्र शीभावो न भवति । दकारस्य शेषलोपो हि आत्वयत्वेतरनिमित्तात्मकशेषविभक्त्यात्मकस्य अम युष्मदस्मदोश्च सन्निपातमाश्रित्य प्रवृत्त । ततश्शीभावे तु आह्णुणे यूये वये इति स्यात । तत्र एकादेशस्य पूर्वान्तत्वे प्रकृत्यनुप्रवेशात् प्रत्ययसन्निपातभङ्ग । परादित्वे तु युष्मदस्मत्सन्निपातविरोध इत्यलम् । अथ द्वितीयैकवचनस्य अम 'ङे प्रथमयो' इत्यामि कृते युष्मद् अम्, अस्मद् अम इति स्थिते । **त्वमावेकवचने** ॥ 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोरित्यनुवर्तते । 'मपर्यन्तस्य' इत्यधिकृतम् । एकवचनशब्दो यौगिक एव । वचनग्रहणसामर्थ्यात् । तदाह । **एकस्येत्यादिना** ॥ त्व अद् अम्, म अद् अम् इति स्थिते । **द्वितीयायाञ्च** ॥ शेषपूरणेन सूत्र व्याचष्टे । **युष्मदस्मदोरिति** ॥ 'युष्मदस्मदोरनादेशे' इत्यत तदनुवृत्तेरिति भाव । **आकार इति** ॥ 'अष्टन आ विभक्तौ' इत्यतस्तदनुवृत्तेरिति भाव । तथाच द्वितीयाविभक्तौ परत युष्मदस्मदोराकार स्यादिति फलति । 'अलोऽन्त्यस्य' इति दकारस्य भवति । त्व अ आ अम्, म अ आ अम् इति स्थिते पररूपे सवर्णदीर्घे अमि पूर्वरूपे च परिनिष्ठित रूपमाह । **त्वाम् । मामिति** ॥ **युवाम् । आवामिति** ॥ पूर्ववत् 'द्वितीयायाञ्च' इत्यात्वमिति विशेष । 'प्रथमायाश्च' इत्यस्य अत्राप्रवृत्ते । अथ शसि विशेषमाह । **शसो न** ॥ 'ङे प्रथमयो' इत्यत अमित्यनुवर्तते । युष्मदस्मद्भ्यामिति च । युष्मदस्मद्भ्या परस्य शसो अम् न स्यादिति लभ्यते । तथाच अमभावे 'द्वितीयायाञ्च' इत्यात्वे पूर्वसवर्णदीर्घे 'तस्माच्छसो न पुसि' इति नत्वे युष्मानिति यद्यपि पुसि रूप सिद्ध्यति । तथापि युष्मान् ब्राह्मणी पश्य, अस्मान् ब्राह्मणी पश्य, युष्मान् ब्राह्मणकुलानि पश्य, अस्मान् ब्राह्मणकुलानि पश्य, इति स्त्रीनपुसकयोर्न सिद्ध्येत् । अतो नेद सूत्र शस अम्निषेधपरम् । किन्तु शसो नकारोऽत्र विधीयते इत्यभिप्रेत्य तर्हि शसो न इति प्रथमा न श्रूयते इत्याशङ्क्य आह । **नेत्यविभक्तिकं पदमिति** ॥ लुप्तप्रथमाविभक्तिकमित्यर्थ । ततश्च फलितमाह । **युष्मदस्मद्भ्यामित्यादिना** ॥ **अमोऽपवादः इति** ॥ 'ङे प्रथमयो' इति प्राप्ते एव नत्वविधेस्तदपवादता । युष्मद् अस्, अस्मद् अस् इति स्थिते 'द्वितीयायाञ्च' इत्यात्वे अनेन शसो नकार । स च 'अलोऽन्त्यस्य' इति नान्त्यस्ये-

## ३९२ । योऽचि । (७-२-८९)

अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया । मया ।

## ३९३ । युष्मदस्मदोरनादेशे । (७-२-८६)

अनयोराकारः स्यादनादेशे हलादौ परे । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ।

## ३९४ । तुभ्यमह्यौ ङयि । (७-२-९५)

अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि । अमादेशः 'शेषे लोपः' (सू. ३८५) । तुभ्यम् । मह्यम् । परमतुभ्यम् । परममह्यम् । अतितुभ्यम् । अतिमह्यम् । युवाभ्याम् । आवाभ्याम् ।

---

त्याह । **आदेः परस्येति** ॥ **सयोगान्तस्येति** ॥ अकारस्य नकारे कृते सकारस्य लोप इति भावः । यद्यपि शसः अमि कृतेऽपि अकारस्य नकारे मकारस्य सयोगान्तलोपे युष्मान् अस्मानिति सिध्यति । तथापि 'सत्यपि सम्भवे बाधनं भवति' इति न्यायान्नत्वस्य अमपवादत्वमाश्रितम् । किञ्च अमि कृते 'ङे प्रथमयोः' इत्यत्र मकारान्तरप्रश्लेषपक्षे अकारस्य नकारे मकारस्य प्रथमस्य सयोगान्तलोपो न स्यादित्यलम् । अथ तृतीया विभक्तिः । युष्मद् आ अस्मद् आ इति स्थिते । **योऽचि** ॥ 'अष्टन आ विभक्तौ' इत्यतः आ इति विभक्ताविति चानुवर्तते । अचीति विभक्तिविशेषणम् । तदादिविधिः । 'युष्मदस्मदोरनादेशे' इत्यनुवर्तते । तदाह । **अनयोरिति** ॥ युष्मदस्मदोरन्त्यस्येत्यर्थः । अचि किम् । युवाभ्याम् । अनादेशे किम् । त्वत्, मत् । 'पञ्चम्या अत्' इत्यदादेशे सति न यत्वम् । युष्मद् आ, अस्मद् आ इत्यत्र 'त्वमावेकवचने' इति मपर्यन्तस्य त्वमादेशयोः दकारस्य यत्वे पररूपे च रूपमिति भावः । **युष्मदस्मदोरनादेशे** ॥ 'अष्टन आ विभक्तौ' इत्यतः आ इति विभक्ताविति चानुवर्तते । 'रायो हलि' इत्यतो हलीत्यनुवृत्तं विभक्तिविशेषणम् । तदादिविधिः । तदाह । **अनयोरिति** ॥ युष्मदस्मदोरन्त्यस्येत्यर्थः । वस्तुतस्तु हलीति नानुवर्तनीयम् । 'योऽचि' इत्यजादौ यत्वविधानेन परिशेषादेव तत्सिद्धेः । **युवाभ्याम् । आवाभ्यामिति** ॥ युष्मद् भ्याम्, अस्मद् भ्याम् इति स्थिते, युवावादेशयोः दकारस्य आत्वे पररूपे सवर्णदीर्घ इति भावः । अत्र हलीत्यनुवृत्तौ 'योऽचि' इत्यज्ग्रहणम्मास्तु । हलादावात्वस्य विशेषविहितत्वादेव यत्वनिवृत्तिसिद्धेरिति भाष्ये स्पष्टम् । **युष्माभिः । अस्माभिरिति** ॥ 'युष्मदस्मदोरनादेशे' इत्यात्वे सवर्णदीर्घ इति भावः । अथ चतुर्थी विभक्तिः । युष्मद् ए, अस्मद् ए इति स्थिते 'त्वमावेकवचने' इति प्राप्ते । **तुभ्यमह्यौ ङयि** ॥ ङे इत्यस्य सप्तम्येकवचनं ङयीति 'युष्मदस्मदोरनादेशे' इत्यतः युष्मदस्मदोरित्यनुवर्तते । मपर्यन्तस्येत्यविकृतम् । तदाह । **अनयोरिति** ॥ युष्मदस्मदोरित्यर्थः । **अमादेशः इति** ॥ 'ङे प्रथमयोः' इत्यनेनेति शेषः । 'शेषे लोपः' इति अदो दस्य वा लोप इत्यर्थः । 'अमि पूर्वः' इति मत्वाह । **तुभ्यम् । मह्यमिति** ॥ **परमतुभ्यमिति** ॥ तुभ्यमह्यविध्योराङ्गत्वात्तद-

## ३९५ । भ्यसो भ्यम् । (७-१-३०)

भ्यसो भ्यम् अभ्यम् वा आदेश स्यात्। आद्य शेषे लोपस्यान्त्यलोपत्व एव। तत्राङ्गवृत्तपरिभाषया एत्त्व न। अभ्यम् तु पक्षद्वयेऽपि साधु' युष्मभ्यम। अस्मभ्यम् ।

## ३९६ । एकवचनस्य च । (७-१-३१)

आभ्या पञ्चम्येकवचनस्य अत् स्यात् । त्वत्। मत्। 'ङसेश्च' इति सुवचम् । युवाभ्याम् । आवाभ्याम् ।

## ३९७ । पञ्चम्या अत् । (७-१-३२)

आभ्यां पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् । अस्मत् ।

---

न्तेऽपि प्रवृत्तिरिति भाव । **अतितुभ्यमिति** ॥ गौणत्वे तदप्रवृत्तौ मानाभावादिति भाव । **युवाभ्याम् । आवाभ्यामिति** ॥ तृतीयाद्विवचनवदिति भाव । **भ्यसो भ्यम्** ॥ भ्यम् अभ्यमिति वा छेद । तदाह । **भ्यस॰ इति** ॥ युष्मदस्मद्भ्या परस्येति शेष । 'युष्मदस्मद्भ्या ङसोऽश्' इत्यतस्तदनुवृत्ते । ननु भ्यमादेशपक्षे 'शेषे लोप' इत्यदो लोपे युष्मभ्य मस्मभ्यामिति मकारादकारो न श्रूयेतेत्यत आह । **आद्य॰ इति** ॥ लक्ष्यानुरोधादिह अन्त्य लोपपक्ष एवाश्रयणीय । नन्वन्त्यलोपपक्षे दकारस्य लोपे सति 'बहुवचने झल्येत्' इत्येत्त्व स्यादित्यत आह । **तत्राङ्गवृत्तेति** ॥ 'अङ्गवृत्ते पुनर्वृत्तावविधि' इति परिभाषयेत्यर्थ । अङ्गे वृत्त वर्तन यस्य तत् अङ्गवृत्त, तस्मिन् कार्ये प्रवृत्ते सति अन्यस्य अङ्गकार्यस्य वृत्तौ प्रवृत्तिविषये अविधि विधिर्नास्तीत्यर्थ । प्रकृते च शेषलोपे अङ्गकार्ये प्रवृत्ते सति, अन्यत् अङ्गकार्यमेत्त्वन्न भवतीति भाव । **अभ्यम् त्विति** ॥ अभ्यमादेशस्तु टिलोपपक्षे अन्त्यलोपपक्षे च अनुकूल इत्यर्थ । तत्र अन्त्यलोपपक्षे अभ्यमो झलादित्वाभावात्तस्मिन् परे एत्त्वन्न । किन्तु पररूपे सति युष्मभ्यम् अस्मभ्यम् इति सिद्ध्यति । टिलोपपक्षे तु अङ्गस्य अदन्तत्वाभावादपि एत्त्वन्न । अथ पञ्चमी विभक्ति । **एकवचनस्य च** ॥ 'युष्मदस्मद्भ्या ङसोऽश्' इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते । 'पञ्चम्या अत्' इत्यत अदिति च । तदाह । **आभ्यामिति** ॥ युष्मदस्मद्भ्यामित्यर्थ । अनेकात्त्वात् सर्वादेश । 'न विभक्तौ' इति तस्य नेत्त्वम् । **त्वत् । मत् इति** ॥ युष्मद् अस्, अस्मद् अस् इति स्थिते त्वमादेशयो कृतयो ङसे अदादेशे सति पररूपे 'शेषे लोप' इति टिलोप । अन्त्यलोपपक्षे दकारलोपे सति त्रयाणामकाराणा पररूपमिति भाव । **सुवचमिति** ॥ लाघवादिति भाव । **पञ्चम्या अत्** ॥ 'युष्मदस्मद्भ्या ङसोऽश्' इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते । 'भ्यसो भ्यम्' इत्यतो भ्यस इति । 'पञ्चम्या अत्' इति च सूत्रम् । तदाह । **आभ्यामिति** ॥ युष्मदस्मद्भ्यामित्यर्थ । **युष्मत् । अस्मदिति** ॥ युष्मद् भ्यस्, अस्मद् भ्यस्, इति स्थिते भ्यस भ्यमादेश शेषलोपश्च । अथ षष्ठी विभक्ति ।

## ३९८ । तवममौ ङसि । (७-२-९६)

अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि ।

## ३९९ । युष्मदस्मद्भ्यां ङसोऽश् । (७-१-२७)

स्पष्टम् । तव । मम । युवयो । आवयो ।

## ४०० । साम आकम् । (७-१-३३)

आभ्या परस्य साम आकम् स्यात् । भाविन सुटो निवृत्त्यर्थ मसुट्कनिर्देश । युष्माकम् । अस्माकम् । त्वयि । मयि । युवयो. । आवयो. । युष्मासु । अस्मासु ।

**तवममौ ङसि** ॥ 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोरित्यनुवर्तते । मपर्यन्तस्येत्यविकृतम् । तदाह । **अनयोरिति** ॥ युष्मदस्मदोरित्यर्थ । 'त्वमावेकवचने' इत्यस्यापवाद । **युष्मदस्मद्भ्यां ङसोऽश्** ॥ **स्पष्टमिति** ॥ युष्मदस्मद्भ्या परस्य ङस अश स्यादिति सुगममित्यर्थ । शित्त्वान् सर्वादेश । **तव । ममेति** ॥ युष्मद् अस्, अस्मद् अस्, इति स्थिते मपर्यन्तस्य तवममादेशयो कृतयो अशादेशे दकारात् पूर्वयोरकारयो पररूपे अदो लोप । अन्त्यलोपपक्षे दकारलोप । त्रयाणामकाराणा पररूपमिति भाव । **युवयो. । आवयोरिति** ॥ युष्मद् ओस्, अस्मद् ओस्' इति स्थिते मपर्यन्तस्य युवावादेशयो 'योऽचि' इति दस्य यत्वे पररूपमिति भाव । **साम आकम्** ॥ **आभ्यामिति** ॥ 'युष्मदस्मद्भ्या ङसोऽश्' इत्यतस्तदनुवृत्तेरिति भाव । **सामः इति** ॥ सकारेण सह वर्तत इति साम् तस्येत्यर्थ । ससुट्कस्य आम इति यावन् । ननु युष्मद् आम्, अस्मद् आम्, इति स्थिते अवर्णात् परत्वाभावात् सुटो न प्रसक्ति । नच 'शेषे लोप' इति दस्य लोपे कृते अवर्णात् परत्वमस्तीति वाच्यम् । आकमादेशात् प्राक् अनादेशतया शेषलोपस्यैवात्राप्रसक्ते ससुट्कनिर्देशोऽनुपपन्न व्यर्थश्चेत्यत आह । **भाविनः इति** ॥ भविष्यत इत्यर्थ । यदि तु आम आकम् इत्येवोच्येत, तर्हि आम आकमादेशे कृते दकारस्य शेषलोपे सति स्थानिवत्त्वेन आकमादेशस्य आम्त्वात् तस्य च अवर्णात्परत्वात् सुडागम स्यात् । तत एत्वषत्वयोर्युष्मेषाकम्, अस्मेषाकमिति स्यात् । अतस्ससुट्कनिर्देश । यद्यपि आकमादेशप्रवृत्तिकाले सुटो न प्रसक्ति । तथापि आकमादेशोत्तर दकारलोपे कृते स्थानिवत्त्वेन यस्सुट् भविष्यति तस्यापि स्थानषष्ठ्या स्वीकरणान्निवृत्तिर्भवति । अन्यथा ससुट्कनिर्देशवैय्यर्थ्यादिति भाव । यदि तु शेषस्य लोप एवाश्रीयते, तदा कृतेऽप्याकमादेशे अदो लोपे अवर्णात् परत्वाभावादेव सुट प्रसक्त्यभावात् ससुट्कनिर्देशो मास्तु । **युष्माकम् । अस्माकमिति** ॥ आकमादेशे कृते अदो लोपे रूपम् । दकारलोपे तु सवर्णदीर्घे । एतदर्थमेव दीर्घोच्चारणम् । अन्यथा पररूपापत्ते । न चाकारोच्चारणसामर्थ्यादेव पररूपनिरास इति वाच्यम् । 'बहुवचने झल्येत्' इत्येत्त्वनिवृत्त्या चरितार्थत्वादित्यलम् । **त्वयि । मयीति** ॥ युष्मद् इ, अस्मद् इ इति स्थिते मपर्य

"समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी ।
समासार्थोऽन्यसङ्ख्यश्चेत्स्तो युवावौ त्वमावपि ॥
सुजस्ङेङस्सु परत आदेशाः स्युः सदैव ते ।
त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥
एते परत्वाद्बाधन्ते युवावौ विषये स्वके ।
त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः ॥

---

न्तस्य त्वमादेशयोः 'योऽचि' इति दस्य यत्वे पररूपे रूपमिति भावः । **युवयोः आवयोरिति** ॥ प्राग्वत्। **युष्मासु । अस्मास्विति** ॥ 'युष्मदस्मदोरनादेशे' इति दकारस्य आत्वे सवर्णदीर्घ इति भावः । 'त्वमावेकवचने' इत्यत्र 'युवावौ द्विवचने' इत्यत्र च एकवचनद्विवचनशब्दौ यौगिकौ, नतु प्रत्ययपराविति स्थितम् । तत्फलं श्लोकचतुष्टयेन सङ्गृह्णाति । **समस्यमाने इति** ॥ तत्र प्रथमश्लोके चेदित्यनन्तरम् अर्पीत्यध्याहार्यम्। यदि समस्यमाने युष्मदस्मदी एकत्ववाचिनी तदा समासार्थः अन्यसङ्ख्यश्चेदपि युवावौ त्वमावपि स्तः इत्यन्वयः । त्वाम् मां वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ता इति, युवामावां वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः इति च विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासं लभमाने युष्मदस्मदी द्वित्वैकत्वान्यतरविशिष्टार्थवाचिनी यदा, तदा समासार्थः मुख्यविशेष्यभूतः अन्यसङ्ख्यश्चेदपि युष्मदस्मदर्थगतसङ्ख्यापेक्षया अन्यसङ्ख्याकश्चेदपि युष्मदस्मदर्थगतद्वित्वे युवावौ तदर्थगतैकत्वे त्वमौ च द्विवचनैकवचनप्रत्ययपरत्वाभावेऽपि भवतः । युवावादेशविधौ द्विवचनशब्दस्य त्वमादेशविधौ एकवचनशब्दस्य च यौगिकत्वाश्रयणात्। एकवचने प्रत्यये परतस्त्वमादेशौ द्विवचने प्रत्यये परतो युवावादेशौ इत्यर्थाश्रयणे तु त्वाम् मां वा अतिक्रान्तौ, अतिक्रान्ताः इति विग्रहे अतियुष्मच्छब्दे अत्यस्मच्छब्दे च युष्मदस्मदोर्द्विवचने बहुवचने च प्रत्यये परे त्वमौ न स्याताम् । तथा युवामावां वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः इति विग्रहे युष्मदस्मदोरेकवचने बहुवचने च प्रत्यये परे युवावौ न स्यातामित्यव्याप्तिस्स्यादित्यर्थः । ननु युष्मदस्मदोर्द्व्यर्थकत्वे युवावौ एकार्थकत्वे तु त्वमौ इति किं सार्वत्रिकम् । नेत्याह । **सुजस्ङेङस्सु इति** ॥ द्वितीयश्लोकेऽस्मिन् उत्तरार्धे त्वाहावित्यादितत्तत्सूत्रप्रतीकग्रहणम् । इतीत्यनन्तरं ये इत्यध्याहार्यम् । 'त्वाहौ सौ, यूयवयौ जसि, तुभ्यमह्यौ ङयि, तवममौ ङसि' इति सुजस्ङेङस्सु ये आदेशा विहिताः ते अतियुष्मदत्यस्मच्छब्दाभ्याम् एकद्विबह्वर्थवृत्तित्वेऽपि स्युरित्यर्थः । ननु तत्रापि द्व्यर्थकत्वे युवावौ एकार्थकत्वे त्वमौ कुतो नेत्यत आह । **एते इति** ॥ तृतीयश्लोके पूर्वार्धमेकं वाक्यम् । एते त्वाहादयः, स्वके स्वीये विषये सुजसादौ, युवावौ बाधन्ते । कुतः, परत्वात् । युवावापेक्षया एतेषां परत्वादित्यर्थः । नन्वस्त्वेवं त्वाहादिभिर्युवावयोर्बाधः । त्वमौ तु तेभ्यः परौ कथं तैर्बाध्येतामित्यत आह । **त्वमावपीति** ॥ **पूर्वेति** ॥ विप्रतिषेधे सति पूर्वं पूर्वविप्रतिषेधः । 'सुप्सुपा' इति समासः । तृतीयान्तात्तसिः । विप्रतिषेधसूत्रे परशब्दस्य इष्टवाचितया क्वचिद्विप्रतिषेधे पूर्वकार्यस्य प्रवृत्त्याश्रयणादिति भावः । 'प्रत्ययोत्तरपदयोश्च'

ह्येकसङ्ख्य समासार्थो बह्वर्थे युष्मदस्मदी।
तयोरह्येकतार्थत्वान्न युवावौ त्वमौ न च॥"

त्वाम् मा वा अतिक्रान्त इति विग्रहे अतित्वम्। अत्यहम्। अतित्वाम्। अतिमाम्। अतियूयम्। अतिवयम्। अतित्वाम्। अतिमाम्। अतित्वाम्। अतिमाम्। अतित्वान्। अतिमान्। अतित्वया। अतिमया। अतित्वाभ्याम्। अतिमाभ्याम्। अतित्वाभिः। अतिमाभिः। अतितुभ्यम्। अतिमह्यम्। अतित्वाभ्याम्। अतिमाभ्याम्। अतित्वभ्यम्। अतिमभ्यम्। ङसिभ्यसोः। अतित्वत्। अतित्वत्। अतिमत्। अतिमत्। भ्यामि प्राग्वत्। अतितव। अतिमम। अतित्वयोः। अतिमयोः। अतित्वाकम्। अतिमाकम्। अतित्वयि। अतिमयि।

---

इति सूत्रभाष्ये तु 'त्वमावेकवचने' इति सूत्रे शेष इत्यनुवर्त्य "सुजस्ङेङसभिन्नविभक्तिषु" इति व्याख्यातम्। तदेव 'त्वमावेकवचने, युवावौ द्विवचने' इत्यत्र एकवचनद्विवचनशब्दयोर्यौगिकत्वाश्रयणस्य अव्याप्तिपरिहारार्थत्वमुक्त्वा अतिव्याप्तिपरिहारार्थत्वमाह। **ह्येकसङ्ख्यः इति**॥ चतुर्थश्लोकेऽस्मिन् यदा तदेत्यध्याहार्यम्। यदा युष्मान् अस्मान् वा अतिक्रान्तौ इति विग्रहे समासे सति द्वित्वैकत्वविशिष्टस्समासार्थः समासस्य मुख्यविशेष्यभूतः युष्मदस्मदी तु बह्वर्थके तदा युवावौ न स्तः। तयोः युष्मदस्मदोः द्वित्वैकत्वविशिष्टार्थकत्वाभावात् युवावविधौ त्वमविधौ च युष्मदस्मदोर्द्वित्वैकत्वविशिष्टवाचित्वे सत्येव प्रवृत्तेराश्रयणात्। द्विवचने एकवचने च प्रत्यये परतः इत्यर्थाश्रयणे तत्रातिव्याप्तिस्स्यादित्यर्थः। अत्र 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे भाष्ये 'त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणम्' इति वार्तिकव्याख्यावसरे 'युवावौ द्विवचने' 'त्वमावेकवचने' इत्यत्र द्विवचनैकवचनशब्दयोर्यौगिकत्वाश्रयणमुपाक्षिप्य युवाम् आवां वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः इति विग्रहान् प्रदर्श्य, त्वाम् मा वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः इति च विग्रहान् प्रदर्श्य अतियुष्मदत्यस्मच्छब्दयोस्सुजस्ङेङस्भ्योऽन्यत्र सर्वासु विभक्तिषु एकद्विबहुवचनेषु सर्वत्र युवावादेशौ त्वमादेशौ च उदाहृत्य प्रदर्शितौ। सुजस्ङेङस्सु तु 'त्वाहौ, यूयवयौ, तुभ्यमह्यौ, तवममौ' इत्येत एवादेशा उदाहृताः। तदिदं श्लोकचतुष्टयेन सङ्गृहीतम्। तदिदानीं तत्प्रपञ्चनपरभाष्यानुसारेणोदाहृत्य प्रदर्शयति। **त्वाम् मां वा अतिक्रान्तः इत्यादिना**॥ अतिक्रान्तौ, अतिक्रान्ताः इति च विग्रहयोरुपलक्षणमिदम्। विग्रहे इत्यनन्तरं रूपाणि वक्ष्यन्त इति शेषः। सुजस्ङेङस्भ्योऽन्यत्र सर्वासु विभक्तिषु एकद्विबहुवचनेषु मपर्यन्तस्य त्वमावेव भवतः। अवशिष्टप्रक्रियास्तु केवलयुष्मदस्मद्वज्ज्ञेयाः। सुजस्ङेङस्सु तु त्वाहौ, यूयवयौ, तुभ्यमह्यौ, तवममौ इत्येते एवादेशाः पूर्वविप्रतिषेधात् त्वमौ बाधित्वा भवन्ति। ततश्च सुजस्ङेङस्सु केवलयुष्मदस्मद्वदेव रूपाणीति निष्कर्षः। **अतित्वाकम्। अतिमाकमिति**॥ ननु 'साम आकम्' इति ससुट्कनिर्देशाद्यत्र आमस्सुट्सम्भवः तत्रैवाकम्, नचात्र सुट् सम्भाव्यते। इह युष्मदस्मदोरुपसर्जनत्वेन सर्वनामत्वाभावात्। सुट्

अतित्वयोः। अतिमयोः। अतित्वासु। अतिमासु। युवाम् आवां वा अतिक्रान्त इति विग्रहे सुजस्ङेङस्सु प्राग्वत्। औअम्औट्सु अतियुवाम्। अतियुवाम्। अतियुवाम्। अत्यावाम्। अत्यावाम्। अत्यावाम्। अतियुवान। अत्यावान्। अतियुवया। अत्यावया। अतियुवाभ्याम्। अत्यावाभ्याम्। अतियुवाभि। अत्यावाभि.। भ्यसि, अतियुवभ्यम्। अत्यावभ्यम्। ङसिभ्यसो. अतियुवन्। अतियुवत्। अत्यावत्। अत्यावत्। ओसि, अतियुवयो.। अतियुवयो। अत्यावयो.। अत्यावयो.। अतियुवाकम्। अत्यावाकम्। अतियुवयि। अत्यावयि। अतियुवासु। अत्यावासु। युष्मानस्मान्वा अतिक्रान्त इति विग्रहे सुजस्ङेङस्सु प्राग्वत्। औअम्औट्सु अतियुष्माम्। अतियुष्माम्। अतियुष्माम्। अत्यस्माम्। अत्यस्माम्। अत्यस्माम्। अतियुष्मान्। अत्यस्मान्। अतियुष्मया। अत्यस्मया। अतियुष्माभ्याम्। अत्यस्माभ्याम्। अतियुष्माभि. अत्यस्माभि'। भ्यसि अतियुष्मभ्यम्। अत्यस्मभ्यम्। ङसिभ्यसो। अतियुष्मत्। अत्यस्मत्। ओसि अतियुष्मयो। अतियुष्मयो.। अत्यस्मयो'। अत्यस्मयो। अतियुष्माकम्। अत्यस्माकम्। अतियुष्मयि। अत्यस्मयि। अतियुष्मासु। अत्यस्मासु।

स्सर्वनाम्न परस्यामो विहितत्वादिति चेत्। नैवम्। ससुट्कत्वस्य सम्भावनामात्रविषयत्वात्। एवञ्च सुट् यत्र सम्भविष्यति तत्र सुटो निवृत्त्यर्थं ससुट्कनिर्देश। यत्र तु सुट् न सम्भवति तत्र केवलस्य आमस्सुट्। अत्र च 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे अतित्वाकमतिमाकामिति भाष्ये तदुदाहरण प्रमाणमित्यास्ता तावत्। तदेवमुपसर्जनयो युष्मदस्मदोरेकार्थवाचित्वे उदाहरणान्युक्त्वा द्व्यर्थवाचित्वे उदाहरति। **युवाम् आवां वा अतिक्रान्त॰ इति**॥ अतिक्रान्तौ, अतिक्रान्ताः इति विग्रहयोरुपलक्षणम्। अत्र युष्मदस्मदोर्द्व्यर्थवृत्तित्वात् सुजस्ङेङस्भ्योऽन्यत्र सर्वासु विभक्तिषु एकद्विबहुवचनेषु मपर्यन्तस्य युवावावेव भवत। अवशिष्टास्तु प्रक्रिया केवलयुष्मदस्मद्वत् ज्ञेया। सुजस्ङेङस्सु तु त्वाहौ, यूयवयौ, तुभ्यमह्यौ, तवममौ, इत्येते एवादेशा परत्वाद्युवावादेशौ बाधित्वा प्रवर्तन्ते। सुजस्ङेङस्सु केवलयुष्मदस्मद्वदेव रूपाणीति निष्कर्ष। अथ युष्मदस्मदोरुपसर्जनयोर्बह्वर्थवाचित्वे उदाहरणान्याह। **युष्मान्। अस्मान्वेति**॥ युष्मानस्मान्वा अतिक्रान्त, अतिक्रान्तौ, अतिक्रान्ता इति विग्रहेष्वित्यर्थ। 'द्व्येकसङ्ख्यस्समासार्थे' इति चतुर्थश्लोकस्योदाहरणान्येतानि। अत्र युष्मदस्मदोरेकद्व्यर्थवाचित्वाभावात् सुजस्ङेङस्भ्योऽन्यत्र मपर्यन्तस्य क्वापि न त्वमौ नापि युवावौ। 'ङे प्रथमयो' इत्याद्यास्तु भवन्त्येव। सुजस्ङेङस्सु तु त्वाहौ, यूयवयौ, तुभ्यमह्यौ, तवममौ इत्येते भवन्त्येव। तेषामेकद्व्यर्थ-

## ४०१ । पदस्य । (८-१-१६)

## ४०२ । पदात् । (८-१-१७)

## ४०३ । अनुदात्तं सर्वमपादादौ । (८-१-१८)

इत्यधिकृत्य ।

## ४०४ । युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ । (८-१-२०)

पदात्परयोरपादादौ स्थितयोरनयो षष्ठ्यादिविशिष्टयोर्वा नौ इत्यादेशौ स्त । तौ चानुदात्तौ ।

## ४०५ । बहुवचनस्य वस्नसौ । (८-१-२१)

उक्तविधयोरनयो. षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्त । वान्नावोरपवाद ।

## ४०६ । तेमयावेकवचनस्य । (८-१-२२)

उक्तविधयोरनयो षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्त ।

## ४०७ । त्वामौ द्वितीयायाः । (८-१-२३)

विशेषनिबन्धनत्वाभावात् । **प्राग्वदिति** ॥ केवलयुष्मदस्मद्वदित्यर्थ । **पदस्य** ॥ **पदात्** ॥ **अनुदात्त सर्वमपादादौ** ॥ **इत्यधिकृत्येति** ॥ विवयो वक्ष्यन्ते इति शेष । अष्टमस्य प्रथमे पादे इमानि सूत्राणि पठितानि । तत्र 'पदस्य' इत्येतत् 'अपदान्तस्य मूर्धन्य' इत्यत प्रागधिक्रियते। 'पदात्' इत्येतत्तु 'कुत्सने च सुप्यगोत्रादौ' इत्यत प्रागधिक्रियते। 'अनुदात्त सर्वमपादादौ' इति पदत्रयन्तु 'आपादसमाप्ते अधिक्रियते' इति भाष्यादिषु स्पष्टम् । **युष्मदस्मदोः षष्ठी** ॥ **षष्ठ्यादिविशिष्टयोरिति** ॥ षष्ठीचतुर्थीद्वितीयाभिस्सह तिष्ठत इति षष्ठीचतुर्थीद्वितीयास्थौ, तयोरिति विग्रह । षष्ठ्यादिविशिष्टयोरिति यावत्। षष्ठीचतुर्थीद्वितीयासु परतस्तिष्ठत इति विग्रहस्तु न भवति । 'पदस्य' इत्यधिकारविरोधात् । पदस्येत्यनुवृत्त हि द्विवचनेन विपरिणत षष्ठीचतुर्थीद्वितीयास्थयोरित्यस्य विशेषणम् । न हि षष्ठ्यादिविभक्तिषु परत पदत्वमस्ति । भ्यामादौ तत्सत्वेऽपि तादितरत्र द्वितीयादौ तदभावात् । स्थग्रहणस्य तु प्रयोजन मूल एव वक्ष्यते। **बहुवचनस्य वस्नसौ** ॥ **उक्तविधयोरिति** ॥ षष्ठ्यादिविशिष्टयोर्युष्मदस्मदोरित्यर्थ । **तेमयावेकवचनस्य** ॥ **षष्ठीचतुर्थ्येकवचनान्तयोरिति** ॥ अत्र द्वितीयाग्रहणन्नानुवर्तते। तत्र त्वामादेशयोर्वक्ष्यमाणत्वात्। 'तेमयौ' इति सूत्रे तेश्च मेश्च तेमयाविति विग्रह इति भाव । अयमपि वान्नावोरपवाद । **त्वामौ द्वितीयायाः** ॥ त्वाश्च माश्चेति विग्रह ।

द्वितीयैकवचनान्तयोस्त्वा मा एतौ स्त ।

श्रीशस्त्वावतु मापीह दत्तात्ते मेऽपि शर्म स ।
स्वामी ते मेऽपि स हरि पातु वामपि नौ विभु ॥
सुखं वां नौ ददात्वीश पतिर्वामपि नौ हरि ।
सोऽव्याद्वो न. शिव वो नो दद्यात्सेव्योऽत्र व. स नः ॥

'पदात्परयो' किम् । वाक्यादौ मा भूत् । त्वां पातु, मा पातु । 'अपादादौ' किम् । 'वेदैरशेषै सवेद्योऽस्मान्कृष्ण सर्वदाऽवतु' । स्थग्रहणा-

---

एकवचनस्येत्यनुवर्तते । तदाह । **द्वितीयेत्यादिना** ॥ अथ विभक्तिक्रमक्लृप्तद्वितीयाचतुर्थीषष्ठी-क्रमेण एकद्विबहुवचनक्रमेण चोदाहरति । **श्रीशः इत्यादिश्लोकद्वयेन** ॥ तत्र "श्रीशस्त्वावतु मापीह" इति प्रथम पाद । श्रिया ईश पति विष्णु त्वा मा अपि पातु इत्यन्वय । अत्र त्वाम्, माम् इति द्वितीयैकवचनान्तयो त्वा मा इत्यादेशौ । **दत्तात्ते मेऽपि शर्म सः इति** ॥ स श्रीश ते मेऽपि शर्म सुख दत्तादित्यन्वय । 'डु दाञ् दाने' आशिषि लोटि दत्तादिति रूपम् । दद्या-दिति क्वचित् पाठ । अत्र तुभ्यम्, मह्यम् इति चतुर्थ्येकवचनान्तयो ते मे इत्यादेशौ । **स्वामी ते मेऽपि स हरिरिति** ॥ अत्र तव मम इति षष्ठ्येकवचनान्तयो ते मे आदेशौ । **पातु वामपि नौ विभुरिति** ॥ विभु सर्वव्यापक वा नौ अपि पातु इत्यन्वय । अत्र युवाम् आवाम् इति द्वितीयाद्विवचनयो वा नौ इत्यादेशौ । **सुखं वां नौ ददात्वीशः इति** ॥ नौ इत्यनन्तरमपिशब्दोऽध्याहार्य । अत्र युवाभ्याम्, आवाभ्याम् इति चतुर्थीद्विवचनान्तयो वा-न्नावौ । **पतिर्वामपि नौ हरिरिति** ॥ अत्र युवयो आवयोरिति षष्ठीद्विवचनान्तयो वा-न्नावौ । **सोऽव्याद्वो नः इति** ॥ स हरि व न अपि अव्यात्, रक्षतात् इत्यर्थ । अत्र युष्मान्, अस्मान् इति द्वितीयाबहुवचनान्तयो वस्नसौ । **शिवं वो नो दद्यादिति** ॥ शिवमिति शुभमुच्यते । न इत्यनन्तरम् अपीत्यध्याहार्यम् । अत्र युष्मभ्यम्, अस्मभ्यम् इति चतुर्थीबहुवचनान्तयो वस्नसौ । **सेव्योऽत्र वः स नः इति** ॥ स हरि वा नौ अपि सेव्य, भजनीय इत्यर्थ । 'कृत्याना कर्तरि वा' इति षष्ठी । अत्र युष्माकम्, अस्माकम् इति षष्ठी-बहुवचनान्तयो वस्नसौ । **त्वां पातु, मां पात्विति** ॥ अत्र युष्मदस्मदो पदात् परत्वा-भावात् 'त्वामौ द्वितीयाया ' इति न भवतीत्यर्थ । यद्यप्यत्र अस्मच्छब्दस्य पात्वितिपदात् परत्वमस्ति । तथापि भिन्नकाल वाक्यद्वयमिह विवक्षितमित्यदोष । **संवेद्योऽस्मानिति** ॥ अत्रास्मच्छब्दस्य पादादौ स्थितत्वान्नादेश । यद्यप्यनुष्टुप्छन्दस्कोऽय श्लोक । तत्र एकैकः पाद अष्टाक्षर इति स्थिति । तत्र सन्ध्यभावे 'अस्मान् कृष्णस्सर्वदाऽवतु' इत्यस्य नवाक्षर-त्वान्न पादत्वम् । कृते तु सन्धौ ओकारस्य परादित्वे सति अष्टाक्षरत्वव्याघात । सवेद् इत्यस्य पदत्वाभावात् अस्मद पदात् परत्वाभावश्च । पूर्वान्तत्वे तु स्मानित्यस्य पादादिस्थितस्य नास्मच्छब्द-रूपता । तथापि सवेद्यो इत्येकादेशविशिष्टस्य पूर्वान्तत्वात् पदत्वम् । स्मानित्यस्य तु एकदेश-

च्छ्रूयमाणविभक्तिकयोरेव। नेह। इति युष्मत्पुत्रो ब्रवीति। इत्यस्मत्पुत्रो ब्रवीति। 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' (वा ४७१४)। 'एकतिङ् वाक्यम्' (११९९)। तेनेह न। ओदनं पच, तव भविष्यति। इह तु स्यादेव। 'शालीनां ते ओदनं दास्यामि' इति। 'एते वांनावादय आदेशा अनन्वादेशे वा वक्तव्याः' (वा ४७१७)। अन्वादेशे तु नित्यं स्युः। धाता ते भक्तोऽस्ति, धाता तव भक्तोऽस्तीति वा। तस्मै ते नम इत्येव।

## ४०८। न चवाहाहैवयुक्ते। (८-१-२४)

---

विकृतन्यायेन द्वितीयान्ताऽस्मच्छब्दरूपत्वम्। वस्तुतस्तु ओकारस्य पूर्वान्तत्वात् सर्वेयो इत्यस्य पदत्वम्, स्मानित्यादेरष्टाक्षरत्वञ्च। परादित्वाच्चास्मच्छब्दरूपता। 'उभयत आश्रयणे नान्तादिवत्' इति तु नास्तीति इण्वार्तौ निरूपयिष्यामः। कश्चित्तु अपादादौ किं, युष्मात्रक्षतु गोविन्दोऽस्मान् कृष्णस्सर्वदाऽवतु इति प्रत्युदाहरन्ति। तन्न। युष्मानित्यस्य पदात् परत्वाभावादेवाप्राप्तेः। अस्मानित्यस्य तु पदात् परत्वेऽपि समानवाक्यस्थपदात् परत्वाभावात्। ननु 'युष्मदस्मदोष्षष्ठीचतुर्थीद्वितीयान्तयोः' इत्येव सूत्र्यताम्, किं स्थग्रहणेन। स्थग्रहणेऽपि कथञ्चित्तस्यैवार्थस्य लाभादित्यत आह। **स्थग्रहणादिति**॥ स्थाधातुः अहानौ वर्तते। "समये तिष्ठ सुग्रीव" इति यथा। समये मर्यादाया विषये अनुवृत्तिं मा हासीरिति गम्यते। ततश्च षष्ठीचतुर्थीद्वितीयाः तिष्ठतः न परित्यजतः इति व्युत्पत्तिर्विवक्षिता। षष्ठ्यादिविभक्तीरपरित्यजतोरित्यर्थः। अलुप्तषष्ठ्यादिविभक्तिविशिष्टयोरिति फलतीति भावः। **इति युष्मत्पुत्रः इति**॥ पदात् परत्वं सम्पादयितुम् इतिशब्दः। युवयोर्युष्माकं वा पुत्रः, आवयोरस्माकं वा पुत्र इति विग्रहः। अत्र विभक्तेर्लुका लुप्तत्वात् श्रूयमाणविभक्तिकत्वाभावान्नादेशप्रवृत्तिः। तव पुत्रो मम पुत्र इति विग्रहस्तु न। 'प्रत्ययोत्तरपदयोश्च' इति तत्र त्वमादेशयोर्वक्ष्यमाणत्वात्। **समानवाक्ये इति**॥ निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थः। निघातशब्दः अनुदात्तवाची। **एकतिङिति**॥ तिङित्यनेन तिङन्तं विवक्षितम्। एकं तिङ् यस्येति विग्रहः। इदञ्च वाक्यलक्षणमेतच्छास्त्रोपयोग्येव। तेन 'पश्य मृगो धावति' इत्यादौ नाव्याप्तिरिति समर्थसूत्रे भाष्ये स्पष्टम्। **ओदनमिति**॥ ओदनं पचेत्येकं वाक्यम्। तव भविष्यतीत्यपरं वाक्यम्। ततश्च तवेतियुष्मच्छब्दस्य भिन्नवाक्यस्थात् पदात् परत्वान्नादेश इति भावः। **शालीनामिति**॥ व्रीहीणामित्यर्थः। प्रकृतिविकारभावे षष्ठी। **एते वांनावादयः इति**॥ इदञ्च 'सपूर्वायाः' इति सूत्रे भाष्ये स्थितम्। **धातेति**॥ महादेवं प्रति वचनमेतत्। अन्वादेशे तु नित्यमित्यस्योदाहरणमाह। **तस्मै ते नम इत्येवेति**॥ अत्र "योऽग्निर्हव्यवाट्। य इन्द्रो वज्रबाहुः" इत्यादि पूर्ववाक्यं द्रष्टव्यम्। एवञ्च किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं बोधयितुं पुनरुपादानादन्वादेशोऽयमिति तत्र नित्य एवादेश इति भावः। **न चवाहा**॥ च इत्यव्ययं समुच्चये, वा इति विकल्पे, हा इत्यद्भुते, अह इति खेदे, एव इत्यवधारणे,

चादिपञ्चकयोगे नैते आदेशा स्यु । हरिस्त्वां मा च रक्षतु । कथ त्वा मां वा न रक्षेदित्यादि । युक्तग्रहणात्साक्षाद्योगेऽय निषेध । परम्परासम्बन्धे त्वादेश स्यादेव । हरो हरिश्च मे स्वामी ।

## ४०९ । पश्यार्थैश्चानालोचने । (८-१-२५)

अचाक्षुषज्ञानार्थैर्धातुभिर्योगे एते आदेशा न स्यु । चेतसा त्वा समीक्षते। परम्परासम्बन्धेऽप्ययं निषेध । भक्तस्तव रूपं ध्यायति । आलोचने तु भक्तस्त्वा पश्यति चक्षुषा ।

## ४१० । सपूर्वायाः प्रथमाया विभाषा । (८-१-२६)

विद्यमानपूर्वात्प्रथमान्तात्पदात्परयोरनयोरन्वादेशेऽप्येते आदेशा वा स्यु । भक्तस्त्वमप्यह तेन हरिस्त्वा त्रायते स माम् । त्वा मा इति वा ।

---

एतेषा द्वन्द्व । युक्त इति भावे क्त । तदाह । **चादिपञ्चकयोगे इति** ॥ पञ्चानामन्यतमेन योगे इत्यर्थ । **एते इति** ॥ वा नावादय इत्यर्थ । 'युष्मदस्मदोष्षष्ठी' इत्यादिसूत्रेभ्यस्तदनुवृत्तेरिति भाव । **इत्यादीति** ॥ कृष्णो मम हा प्रसीदति । अद्भुतमिदमित्यर्थ । कृष्णो ममाह न प्रसीदति । अहेति खेदे । कृष्णो ममैव सेव्य । ननु 'न चवाहाहैवे' इत्येवास्तु, मास्तु युक्तग्रहणम् । 'वृद्धो यूना' इत्यादिवत् तृतीययैव तल्लाभादित्यत आह । **युक्तग्रहणादिति** ॥ यत्र चाद्यर्थै समुच्चयादिभिर्युष्मदस्मदर्थयोस्साक्षादन्वय तत्रैवायन्निषेध इत्यर्थ । **हरो हरिश्चेति** ॥ अत्र चशब्दस्य हरिहरयोस्साक्षादन्वय । समुच्चितयोर्हरिहरयो स्वामीत्यत्रान्वय । स्वामीत्यस्य मे इत्यनेनान्वय । ततश्च चशब्दस्य अस्मच्छब्देन साक्षादन्वयाभावात् मेआदेशस्य निषेधो नेति भाव । **पश्यार्थैश्चानालोचने** ॥ दर्शन पश्य । 'दृशिर् प्रेक्षणे' इत्यस्मादत एव निपातनात् भावे शप्रत्यय । 'पाघ्रा' इति पश्यादेश । पश्य दर्शनम् अर्थो येषान्ते पश्यार्था, तैरिति विग्रह । आलोचन चाक्षुष ज्ञान, तद्भिन्नमनालोचनम्, तत्र विद्यमानै दर्शनार्थकैरित्यर्थ । पश्येति दृशिना ज्ञानसामान्य विवक्षितम् । अनालोचने इति चाक्षुषपर्युदासात् । तदाह । **अचाक्षुषेत्यादिना** ॥ **चेतसेति** ॥ देवेत्यध्याहार्यम् । हे देव मनसा त्वा चिन्तयतीत्यर्थ । **परम्परेति** ॥ 'न चवाहा' इत्यत्र युक्तग्रहणसामर्थ्यात् साक्षात्सम्बन्धविवक्षा युक्ता । इह तु तद्विवक्षाया मानाभावात् परम्परान्वयेऽपि स्यादेव निषेध इत्यर्थ । **भक्तस्तवेति** ॥ देवेत्यध्याहार्यम् । इह तवेत्यस्य रूपेणान्वय, न तु साक्षात् ध्यायतिनेति भाव । अनालोचने इत्यस्य प्रयोजनमाह । **आलोचने त्विति** ॥ **सपूर्वायाः** ॥ वानावाद्यादेशा अनन्वादेशे पाक्षिका, अन्वादेशे तु नित्या इत्युक्तम् । अन्वादेशेऽपि क्वचिद्विकल्पार्थमिदम् । सहशब्दोऽत्र सलोमक इत्यादिवत् विद्यमानवाची । विद्यमान पूर्व यस्या इति विग्रह 'तेन सहेति तुल्ययोगे' इति वा विग्रह । तुल्ययोगवचन प्रायिकम् इति वक्ष्यमाणत्वात् । प्रथमेत्यनेन तदन्त गृह्यते । तदाह । **विद्यमानेत्यादिना** ॥ परयोरित्यनन्तर युष्मदस्मदोरिति शेष ।

## ४११ । सामन्त्रितम् । (२-३-४८)

सम्बोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात् ।

## ४१२ । आमन्त्रितं पूर्वमविद्यमानवत् । (८-१-७२)

स्पष्टम् । अग्ने तव । देवास्मान्पाहि । अग्ने नय । अग्न इन्द्र वरुण । इह युष्मदस्मदोरादेशस्तिङन्तनिघात आमन्त्रितनिघातश्च न । 'सर्वदा रक्ष देव न' इत्यत्र तु देवेत्यस्याविद्यमानवद्भावेऽपि तत प्राचीनं रक्षेत्येतदाश्रि-

**भक्तस्त्वमिति** ॥ देवदत्तेत्यध्याहार्यम् । हे देवदत्त त्वमहमपि भक्त इत्यन्वय । **तेनेति** ॥ भक्तत्वेनेत्यर्थ । **त्रायते इति** ॥ पालयन्तीत्यर्थ । अत्र पूर्ववाक्योपात्तयुष्मदस्मदर्थयोरिह पुनरुपादानादन्वादेशोऽयम् । अत्र तेनेत्येतत् पूर्वं विद्यमान पद, तत पर हरिरिति प्रथमान्त, तत परस्य युष्मच्छब्दस्यान्वादेशेऽपि त्वादेशविकल्प । तथा त्रायत इत्येतत् पूर्वं विद्यमान पदम्, तत पर स इति प्रथमान्तम्, तत परस्यास्मच्छब्दस्यान्वादेशेऽपि मादेशविकल्प । त्रायत इत्येतत् मध्यमणिन्यायेन उभयत्र सम्बध्यते । तेन निमित्तनिमित्तिनो समानवाक्यस्थत्व स इत्यस्य विद्यमानपूर्वत्व च बोध्यम् । **सामन्त्रितम्** ॥ प्रातिपदिकार्थसूत्रोपात्ता प्रथमा सा इत्यनेन परामृश्यते । 'सम्बोधने च' इत्यतस्सम्बोधने इत्यनुवर्तते । तदाह । **सम्बोधने इत्यादिना** ॥ तदन्तमिति प्रत्ययग्रहणपरिभाषालभ्यम् । महासञ्ज्ञाकरणात् सञ्ज्ञाविधावपि तदन्तग्रहणम्, अत एव हेहैभो इत्यादीनामपि सञ्ज्ञा सिद्धा । **आमन्त्रित पूर्वमविद्यमानवत्** ॥ **स्पष्टमिति** ॥ अनुवर्तनाथपदान्तराभावादिति भाव । **अग्ने तवेति** ॥ "अग्ने तव श्रवो वय" इत्यृचि अग्ने इत्यविद्यमानवत् । देवास्मानित्यत्र देवशब्द अविद्यमानवत् । "अग्ने नय" इत्यृचि अग्ने इत्यविद्यमानवत् । "अग्न इन्द्र वरुण" इत्यृचि अग्ने इत्यविद्यमानवदिति भाव । तत किमित्यत आह । **इहेति** ॥ अग्ने तवेत्यत्र देवास्मानित्यत्र च युष्मदस्मदो तेनमावादेशौ न भवत । तव अस्मानित्यनयो पदात् परत्वाभावात् पादादौ स्थितत्वाच्च । 'अग्ने नय' इत्यत्र नयेति तिङन्तस्य 'तिङ्ङतिङ' इत्यनुदात्तत्व न भवति । अतिङन्तात् पदात् पर तिङन्त निहन्यते, इति हि तदर्थ । इह च अग्ने इत्यतिङन्तस्य अविद्यमानवत्त्वादतिङन्तात् परत्वाभावात् नानुदात्तत्वम् । अग्न इन्द्र वरुणेत्यत्र तु 'आमन्त्रितस्य च' इति सर्वानुदात्तत्वन्न भवति । पदात् परमामन्त्रितन्निहन्यते इति हि तदर्थ । इह च अग्नेशब्दस्याविद्यमानवत्त्वेन पदात् परत्वाभावात् इन्द्रशब्दस्य नानुदात्तत्वम् । एव वरुणशब्दस्यापि नानुदात्तत्वम् । तत प्राचीनयो अग्ने इन्द्र इत्यनयोरविद्यमानवत्त्वात् । ननु सर्वदा रक्ष देव न, इत्यत्र कथन्नसादेश । देवेत्यस्याविद्यमानवत्त्वादित्यत आह । **सर्वदेति** ॥ "लक्ष्मीपते तेऽङ्घ्रियुग स्मरामि । प्रतापरुद्र ते ख्याति" इत्यादौ तु ते इति विभक्तिप्रतिरूपकमव्ययम् । तत्र आमन्त्रितस्याविद्यमानवत्त्वात् युष्मद्शब्दस्य पादादिस्थत्वात् । **एवमिति** ॥ इमम्मे गङ्गे यमुने इति मन्त्रे सर्वेषान्निघात इत्यन्वय । 'आम-

त्यादेशः । एवम् 'इम मे गङ्गे यमुने' इति मन्त्रे यमुन इत्यादिभ्य: प्राचीनानामामन्त्रितानामविद्यमानवद्भावेऽपि मेशब्दमेवाश्रित्य सर्वेषां निघातः ।

## ४१३ । नामन्त्रिते समानाधिकरणे सामान्यवचनम् । (८-१-७३)

विशेष्यं समानाधिकरणे विशेषणे आमन्त्रिते परे नाविद्यमानवत्स्यात् । हरे दयाळो न पाहि । अग्ने तेजस्विन् । 'विभाषितं विशेषवचने' (सू ३६५५)। अत्र भाष्यम् 'बहुवचनमिति वक्ष्यामि' इति। बहुवचनान्तं विशेष्यं समानाधिकरणे आमन्त्रिते विशेषणे परे अविद्यमानवद्वा । यूयं प्रभव देवा शरण्या, युष्मान्भजे, वो भजे इति वा । इहान्वादेशेऽपि वैकल्पिका आदेशा. । सुपात्—सुपाद् । सुपादौ । सुपाद. । सुपादम् । सुपादौ ।

---

न्त्रितस्य च' इत्यनुदात्तत्वमित्यर्थ । सर्वशब्द विशिनष्टि । **यमुन इत्यादिभ्यः प्राचीनानामिति ॥** इति आदिर्येषामिति विग्रह । आदिना सरस्वतीशुतुद्रीत्यनयोर्ग्रहणम् । तद्गुणसंविज्ञानो बहुव्रीहि । यमुने, सरस्वति, शुतुद्रि, इत्येतेभ्य एकैकस्मात्प्राचीनाना गङ्गे, यमुने, सरस्वति इत्येषा सर्वेषान्निघात इत्यर्थ । शुतुद्रिशब्दस्य तु अनुदात्तत्वन्नेत्यविवादम् । तस्य द्वितीयपादादिस्थत्वात् । 'आमन्त्रितस्य च' इत्यत्र 'पदस्य, पदात्, अनुदात्त सर्वमपादादौ' इत्यनुवृत्ते । "इमम्मे" इत्यृचो जगतीच्छन्दस्कतया सरस्वतीत्यन्ते प्रथमपादस्य द्वादशाक्षरस्य समाप्ते । ननु गङ्गे इत्यस्यानुदात्तत्वमुचितम्, तस्य मे इति पदात् परत्वात् । यमुने, सरस्वति, इत्यनयोस्तु नानुदात्तत्वसम्भव । तत प्राचीनयो गङ्गे, यमुने, इत्यनयोरविद्यमानवत्त्वेन पदात् परत्वाभावादित्यत आह । **आमन्त्रितानामविद्यमानवद्भावेऽपि मेशब्दमेवाश्रित्येति ॥** आमन्त्रिताना मध्ये गङ्गे, यमुने, इत्यनयोरविद्यमानवद्भावेऽपीति योजनीयम् । एवञ्च इत्यादिभ्य इति सर्वेषामिति च बहुवचनमनुपपन्नमित्यपास्तम् । क्वचित् पुस्तकेषु यमुन इत्यादिप्राचीनामन्त्रिताविद्यमानवद्भावेऽपीति पाठो दृश्यते । तत्र आदिना सरस्वतीत्येतदुच्यते । यमुने, सरस्वतीत्याभ्या प्राचीनयोरामन्त्रितयोरविद्यमानवद्भावेऽपीति सुगममेव । अयञ्च निघात पदकाले स्पष्ट श्रूयते । **नामन्त्रिते ॥** आमन्त्रितम् अविद्यमानवदित्यनुवर्तते । सामान्यवचनमित्यनेन विशेष्यसमर्पकश्शब्दो विवक्षित । विशेष्यस्य विशेषणापेक्षया सामान्यरूपत्वात् । तेन च विशेषणमाक्षिप्यते । समानाधिकरणे इति तत्रान्वेति । समानम् अधिकरण यस्येति विग्रह । समानशब्द एकत्वपर । विशेष्यबोधकशब्देन अभेदससर्गेण एकार्थवृत्तित्व विवक्षितमित्याशयेनाह । **विशेष्यमित्यादिना ॥ हरे दयाळो इति ॥** अत्र दयाळो इति समानाधिकरणविशेषणे परे हरिशब्दो नाविद्यमानवत् । ततश्च दयाळो इत्यस्याविद्यमानवत्त्वेऽपि हरेइतिपदान् परत्वान्नसादेश इति भाव । **अग्ने तेजस्विन्निति ॥** इह तेजस्विन्निति विशेषणे परे अग्ने इत्यस्य अविद्यमानवत्त्वाभावात् पदात् परत्वा-

४१४ । पादः पत् । (६-४-१३०)

पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः स्यात् । सुपदः । सुपदा । सुपाद्भ्यामित्यादि ।

इति दान्ता ।

## ॥ अथ हलन्तपुल्लिँङ्गे थकारान्तप्रकरणम् ॥

अग्निं मन्थतीत्यग्निमत्—अग्निमद् । अग्निमथौ । अग्निमथ । अग्निमद्भ्यामित्यादि ।

इति थान्ता ।

---

तेजस्विन्नित्यस्य निघात इति भाव । सु शोभनौ पादौ यस्येति बहुव्रीहौ 'सङ्ख्या सुपूर्वस्य' इति पादशब्दान्त्यलोपे सुपाद्शब्द । तस्य सुटि रूपाण्याह । **सुपादित्यादिना** ॥ शसि विशेषमाह । **पादः पत्** ॥ भस्य अङ्गस्येति चाविकृत पाद इत्यनेन विशेष्यते । तदन्तविधि । तदाह । **पाच्छब्दान्तमिति** ॥ **पाच्छब्दस्येति** ॥ पाच्छब्दान्तस्य विधीयमानोऽपि पदादेश 'निर्दिश्यमानस्यादेशा भवन्ति' इति पाद्शब्दस्यैव सर्वादेशो भवति, नतु तदन्तस्येति भाव । **इत्यादीति** ॥ सुपदे । सुपद । सुपद । सुपदो । सुपदि ॥

इति दान्ता ।

अथ थकारान्ता निरूप्यन्ते । **अग्निमदिति** ॥ 'मन्थ हिंसासङ्क्लेशनयो' इति भ्वादौ । 'मन्थ विलोडने' इति क्र्यादौ । उभाभ्यामपि क्विपि 'अनिदिताम्' इति नलोपे अग्निमथ् इति रूपम् । ततस्सुबुत्पत्ति । सौ जश्त्वचर्त्वे इति भाव । भ्यामादौ जश्त्वेन थस्य द । अग्निमद्भ्यामित्यादि । सुपि 'खरि च' इति चर्त्वम्, अग्निमत्सु । 'मथे विलोडने' इत्यस्याप्येतदेव रूपम् । 'मथि हिंसासङ्क्लेशनयो.' इति इदितस्तु नलोपाभावात् अग्निमन् अग्निमन्थावित्यादि ॥

इति थान्ता ।

## ॥ अथ हलन्तपुल्लिँङ्गे चकारान्तप्रकरणम् ॥

'ऋत्विग्—' (सू ३७३) इत्यादिसूत्रेणाञ्चेः सुप्युपपदे क्विन् ।

### ४१५ । अनिदितां हल उपधायाः क्ङिति । (६-४-२४)

हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात्किति ङिति च । 'उगिदचाम्—' (सू ३६१) इति नुम् । संयोगान्तस्य लोपः' (सू १४) नुमो नकारस्य 'क्विन्प्रत्ययस्य कुः' (सू ३७७) इति' कुत्वेन ङकारः । प्राङ् । अनुस्वारपरसवर्णौ । प्राञ्चौ, प्राञ्चः । प्राञ्चम्, प्राञ्चौ ।

### ४१६ । अचः । (६-४-१३८)

लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात् ।

### ४१७ । चौ । (६-३-१३८)

---

अथ चकारान्ता निरूप्यन्ते । **ऋत्विगित्यादिसूत्रेणेति** ॥ प्र अञ्चतीत्यर्थे 'अञ्चु गतिपूजनयोः' इति गत्यर्थकाद्धातोः नोपधात् क्विनित्यर्थः । पूजार्थस्य त्वग्रे वक्ष्यते । क्विनि 'हलन्त्यम्' इति नकार इत् । इकार उच्चारणार्थः । 'लशक्वतद्धिते' इति ककार इत् । 'वेरपृक्तस्य' इति वकारलोपः । प्र अञ्च् इति स्थिते । **अनिदिताम्** ॥ अङ्गस्येत्यविकृतं बहुवचनेन विपरिणम्यते । हल इति तद्विशेषणम्, तदन्तविधिः । 'अनिदिताम्' इत्यपि तद्विशेषणम् । इत् ह्रस्व इकारः इत्सञ्ज्ञकः येषां तानि इदिन्ति, न इदिन्ति अनिदिन्ति, तेषामिति विग्रहः । अवयवषष्ठ्यन्तमेतत् उपधाया इत्यत्रान्वेति । उपधाया इत्यप्यवयवषष्ठ्यन्तम् । तच्च 'श्नान्न लोपः' इत्यतो नेत्यनुवृत्ते लुप्तषष्ठीके अन्वेति । क् च ङ् च क्ङौ इतौ यस्येति विग्रहः । तदाह । **हलन्तानामित्यादिना** ॥ इति चकारात्पूर्वस्य नकारस्य लोपः । प्र अच् इति स्थितम् । तस्मात् सुबुत्पत्तिः । सुटि विशेषमाह । **उगिदचामिति नुमिति** ॥ सौ विशेषमाह । **संयोगान्तस्य लोपः इति** ॥ हल्ङ्यादिना सुलोपे सतीति शेषः । **कुत्वेन ङकारः इति** ॥ नासिकास्थानसाम्यादिति भावः । **अनुस्वारपरसवर्णाविति** ॥ प्राच् औ इति स्थिते नुमि 'नश्चापदान्तस्य' इति नकारस्यानुस्वारः । 'अनुस्वारस्य ययि' इति तस्य परसवर्णः ञकारः । नस्य श्चुत्वन्तु न भवति । अनुस्वारं प्रति तस्यासिद्धत्वादित्यर्थः । शसादावचि नुमभावात् प्र अच् अस् इति स्थिते । **अचः** ॥ अच इत्यञ्चुधातोः 'अनिदिताम्' इति लुप्तनकारस्य षष्ठ्यन्तम् । भस्येत्यविकृतम् । 'अल्लोपोऽनः' इत्यतः अल्लोप इत्यनुवर्तते । तदाह । **लुप्तेति** ॥ इत्यकारलोपे प्रच् अस् इति स्थिते । **चौ** ॥ अञ्चुधातोरुकारान्तस्य लुप्तनकाराकारस्य चाविति सप्तम्यन्तम् ।

लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घ. स्यात । प्राच । प्राचा, प्राग्भ्यामित्यादि । प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्च. । प्रत्यञ्चम्, प्रत्यञ्चौ । 'अच.' (सू ४१६) इति लोपस्य विषयेऽन्तरङ्गोऽपि यण् न प्रवर्तते । 'अकृतव्यूहा:—(प ५७) इति परिभाषया । प्रतीच । प्रतीचा । 'अमुमञ्चति' इति विग्रहे 'अदस् अञ्च्' इति स्थिते ।

## ४१८ । विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये । (६-३-९२)

**अनयो सर्वनाम्नश्च टेरद्र्यादेश स्यादप्रत्ययान्ते अञ्चतौ परे । 'अद्रि अञ्च्' इति स्थिते, यण् ।**

---

'ढ्रलोपे' इत्यत दीर्घोऽण इत्यनुवर्तते । तदाह । **लुप्तेति** ॥ **प्राचः इति** ॥ यद्यपि 'अच' इत्यल्लोपस्य 'चौ' इति दीर्घस्य चाभावेऽपि सवर्णदीर्घेण प्राच इति सिद्ध्यति । तथापि प्रतीच इत्याद्यर्थ सूत्रम् । **प्राग्भ्यामिति** ॥ प्राच् भ्याम् इति स्थिते 'चो कु' इति कुत्वम् । 'क्विन्प्रत्ययस्य कु' इति कुत्वस्यासिद्धत्वात् । **इत्यादीति** ॥ प्राग्भि । प्राचे । प्राच, प्राचो, प्राक्षु । **प्रत्यङ् इति** ॥ प्रतिपूर्वादञ्चे क्विन्, यण्, 'अनिदिताम्' इति नलोप, सुबुत्पत्ति । 'उगिदचाम्' इति नुम्, हल्ङ्यादिना सुलोप, चकारस्य संयोगान्तलोप, नुमो नकारस्य 'क्विन्प्रत्ययस्य' इति कुत्वेन ङकार इति भाव । **प्रत्यञ्चाविति** ॥ प्रत्यच् औ इति स्थिते 'उगिदचाम्' इति नुमि तन्नकारस्य श्चुत्वेन ञकार इति भाव । एव प्रत्यञ्च । प्रत्यञ्चम्, प्रत्यञ्चौ । ननु प्रति अञ्च् इति स्थिते अन्तरङ्गत्वाद्यणि कृते 'अनिदिताम्' इति नलोपे प्रत्यच् इत्यस्मात् शसि असर्वनामस्थानत्वात 'उगिदचाम्' इति नुमभावे 'अच' इत्यकारलोपे 'चौ' इति दीर्घो न भवति । पूर्वस्याणोऽभावात् । ततश्च प्रत्यच इति स्यादित्यत आह । **अचः इति लोपस्येत्यादि** ॥ 'अच' इति लोपेन यण्निमित्तस्याकारस्य विनाशोन्मुखत्वादिह यण्न भवति । ततश्च प्रति अच् अस् इति स्थिते 'अच' इत्यकारलोपे सति 'चौ' इति इकारस्य दीर्घे प्रतीच इति रूप निर्बाधम् । एतदर्थमेव 'अच' इति 'चौ' इति चारब्धम् । प्राच पश्येत्यत्र अल्लोपदीर्घयोरभावेऽपि सवर्णदीर्घेणैव रूपसिद्धे । भाष्ये तु 'चौ' इत्यारम्भसामर्थ्यादेवात्र यण् नेति समाहितम् । न च प्राच पश्येत्यादौ सावकाशत्वमिति वाच्यम् । सवर्णदीर्घेणैव निर्वाहात् 'ग्राणोदाङ्ग बलीय' इति परिभाषया 'अच' इत्यल्लोपे सति सवर्णदीर्घासिद्धेरित्यन्यत्र विस्तर । **अदस् अञ्च् इति स्थिते इति** ॥ क्विनि उपपदसमासे सुब्लुकि च सति अदस् अञ्च् इति स्थिते 'अनिदिताम्' इति नलोपे कृते अदस् अच् इति स्थिते सतीत्यर्थ । **विष्वग्देवयोश्च** ॥ अद्रि इति लुप्तप्रथमाकम् । **अनयोरिति** ॥ विष्वग्देवशब्दयोरित्यर्थ । **सर्वनाम्नः इति** ॥ चकारेण 'आ सर्वनाम्न' इत्यतस्तदनुकर्षादिति भाव । **अप्रत्ययान्ते इति** ॥ सूत्रे अप्रत्यय इत्यत्र नित्यम् अश्रूयमाणत्वादविद्यमान प्रत्यय

## ४१९ । अदसोऽसेर्दादु दो मः । (८-२-८०)

अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च । उ इति ह्रस्वदीर्घयो समाहारद्वन्द्व । आन्तरतम्याद्ध्रस्वव्यञ्जनयोर्ह्रस्वो दीर्घस्य दीर्घ. । **अमुमुयङ्, अमुमुयञ्चौ, अमुमुयञ्च । अमुमुयञ्चम्, अमुमुयञ्चौ, अमुमुईच । अमुमुईचा, अमुमुयग्भ्यामित्यादि । मुत्वस्यासिद्धत्वान्न यण् । 'अन्त्यबाधेऽन्त्यसदेशस्य' (प १०४) इति परिभाषामाश्रित्य परस्यैव मुत्वं**

---

क्विबादिर्यस्मादिति बहुव्रीह्याश्रयणादिति भाव । प्रकृते अदसष्टेरद्र्यादेशमुदाहृत्य दर्शयति । **अदद्रि अञ्च् इति स्थिते इति** ॥ अद्र्यादेशोऽयम् 'अनिदिताम्' इति नलोपे कृते प्रवर्तते । नलोपस्य परत्वादिति बोध्यम् । **यणिति** ॥ रेफादिकारस्येति शेष । अदद्र्यच् इत्यतस्सुबुत्पत्ति । **अदसो** ॥ अदस असे दात् उ द म इति च्छेद । अदस, इत्यवयवषष्ठ्यन्तम् । असेरिति तद्विशेषणम् । न विद्यते सि यस्य स असि तस्येति विग्रह । इकार उच्चारणार्थ । दादिति दिग्योगे पञ्चमी । परस्येत्यध्याहार्यम् । तदाह । **अदसोऽसान्तस्येति** ॥ असे किम् । अदस्यति । दात् किम् । अमुया । अत्र 'अलोऽन्त्यस्य' इति यकारस्य न भवति । ननु उदूताविति कथम्, उ इत्यस्यैव श्रवणादित्यत आह । **उ इतीति** ॥ उश्च ऊश्च तयोस्समाहार इति विग्रहे, द्वन्द्वे सति, सुब्लुकि, सवर्णदीर्घे 'सनपुसकम्' इति नपुसकत्वे, 'ह्रस्वो नपुसके प्रातिपदिकस्य' इति ह्रस्वत्वे, समाहारस्यैकत्वादेकवचनस्य सो 'स्वमोर्नपुसकात्' इति लुकि, उ इति रूपमित्यर्थ । **आन्तरतम्यादिति** ॥ अर्धमात्रस्य व्यञ्जनस्य ईषत्सदृशो मात्रिको ह्रस्व उकार । ह्रस्वस्य तु मात्रिकस्य मात्रिकत्वसादृश्यादुकारो ह्रस्व । दीर्घस्य तु द्विमात्रत्वसादृश्यात् द्विमात्र ऊकार इत्यर्थ । **अमुमुयङिति** ॥ अदद्र्यच् स् इति स्थिते 'उगिदचाम्' इति नुमि, हल्ङ्यादिलोपे, चकारस्य सयोगान्तलोपे, नुमो नकारस्य 'क्विन्प्रत्ययस्य कु' इति कुत्वे, अदद्र्यङ् इति स्थिते, प्रथमदकारस्य मत्वे, तदुत्तरस्याकारस्य उत्वे, द्वितीयदकारस्य मत्वे, तदुत्तरस्य रेफस्य उत्वे च कृते, अमुमुयङिति रूपमिति भाव । प्रक्रियाक्रमस्तु सूत्रपौर्वापर्यज्ञानवता सुगमम् । **अमुमुयञ्चाविति** ॥ प्राञ्चावितिवद्रूपम् । उत्वमत्वे पूर्ववत् । अमुमु इ अच् औ इति स्थिते यणिति विशेष । **अमुमुईचः इति** ॥ अमुमु इ अच् इति स्थिते अन्तरङ्गोऽपि यण् 'अच' इति लोपविषये न प्रवर्तते इत्युक्तरीत्या अकृते यणि 'अच' इत्यकारलोपे 'चौ' इति इकारस्य दीर्घ इति भाव । **अमुमुयग्भ्यामिति** ॥ 'चो कु' इति कुत्वमिति विशेष । इकारे परे मकारादुकारस्य यणमाशङ्क्य आह । **मुत्वस्यासिद्धत्वादिति** ॥ अमुमुईचे । अमुमुईच । अमुमुईचो । अमुमुयक्षु । मतान्तरमाह । **अन्त्यबाधे इति** ॥ अलोऽन्त्यपरिभाषाया अप्रवृत्त्या अन्त्यस्य कार्याभावे सति अन्त्यसमीपवर्तिन कार्यं भवतीत्यर्थ । प्रकृते च अदस इति नावयवषष्ठी । किन्तु स्थानषष्ठी । ततश्च 'अलोऽन्त्यस्य' इत्युपतिष्ठते । असान्तस्य अदस अन्त्यस्य दात्परस्य उत्व दस्य च म इति फलितम् । **अदसश्चान्त्यवर्णस्सकार**

वदता मते 'अदमुयङ्'। 'अ से सकारस्य स्थाने यस्य स असि तस्य असे' इति व्याख्यानात् 'त्यदाद्यत्वविषय एव मुत्व नान्यत्र' इति पक्षे 'अदद्र्यङ्'। उक्तं च (भाष्ये)।

"अदसोऽद्रे पृथङ्मुत्व केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥" इति ।

'विष्वग्देवयो' किम् । अश्वाची । अञ्चतौ' किम् । विष्वग्युक् । 'अप्रत्यये' किम् । विष्वगञ्चनम् । अप्रत्ययग्रहणं ज्ञापयति 'अन्यत्र

दात्परो न भवति । अद्र्यादेशे कृते तु इकार अन्न सोऽपि दात्परो न भवति । ततश्च अलोऽन्त्यपरिभाषाया अप्रवृत्त्या अन्त्यस्य आदेशबाधे सति अन्तसमीपवर्तिन एव दात्परस्य उत्वम्, दस्य च म, नतु तत प्राचीनयोरपि दकारतदुत्तरवर्णयोर्मुत्वमित्यर्थ । नन्वेव सति 'णो न' इति धात्वादेर्णकारस्य विहित नत्व नेता इत्यत्रैव स्यात् । नमतीत्यत्र न स्यादिति चेत्, मैवम् । अलोऽन्त्यपरिभाषाया अप्रवृत्त्या अन्त्यसदेशानन्त्यसदेशयोर्युगपत्प्राप्तौ अन्त्यसदेशस्यैव भवतीति परिभाषार्थ इति 'ष्यङस्सम्प्रसारणम्' इति सूत्रे भाष्ये स्पष्ट प्रपञ्चितत्वात् । यद्यपि 'ष्यङस्सम्प्रसारणम्' इति सूत्रे प्रकृतसूत्रे च 'अनन्त्यऽविकारे अन्त्यसदेशस्य' इति परिभाषा पठिता। तथापि सैवात्रार्थतस्सङ्गृहीता। अन्त्यस्य विकार आदेश अन्त्यविकार । अन्त्यविकारस्याभाव अनन्त्यविकार अर्थाभावेऽव्ययीभावेन सह नञ्तत्पुरुषो विकल्प्यते इति वक्ष्यमाणत्वात्तत्पुरुष । अव्ययीभावपक्षे तु 'तृतीयासप्तम्योर्बहुळम्' इत्यम्भावाभाव । अलोऽन्त्यपरिभाषाया अप्रवृत्त्या अन्त्यस्य आदेशाभावे सतीति यावत् । **अदमुयङिति** ॥ अत्र पूर्वस्य दकारस्य तदुत्तराकारस्य च न मुत्वमिति विशेष । मतान्तरमाह । **अः से· सकारस्येति** ॥ सेरित्यस्य विवरण सकारस्येति । असेरिति नायन्नञ्तत्पुरुष, किन्तु अ से यस्य स असि, तस्य असेरिति विग्रह । सेरिति स्थानषष्ठी, इकार उच्चारणार्थ, सकारस्थानकाकारवत इत्यर्थ । अदस्शब्दस्य त्यदाद्यत्वे कृते सकारस्थानकाकारवत्त्वम् । अत त्यदाद्यत्ववत एवादस्शब्दस्य मुत्व नान्यस्य इति फलितम् । अत अद्र्यादेशे सति सकारस्थानकाकारवत्त्वाभावान्न मुत्वमित्यर्थ । तदिद पक्षत्रयमपि भाष्यसम्मतमित्याह । **उक्तञ्चेति** ॥ अदस टे अद्रेर्विधौ सति अदद्र्यच् इत्यत्र प्रथमद्वितीययो दकारयो पृथङ्मत्व तदुत्तरयो अवर्णरेफयोरुत्वञ्च युगपदेव । लत्ववत् । चलीक्लृप्यते इत्यत्र चरीकृप्यते इति स्थिते रेफऋकारयोर्यथा 'कृपो रो ल' इति लत्व, तथा केचिदिच्छन्ति । अन्त्यसदेशस्यैव केचित् लत्वमिच्छन्ति । अद्र्यादेशे सति प्रथमयोर्द्वितीययोश्च मुत्व नैव केचिदिच्छन्ति । हि यत असे सकारस्थानकाकारवत एव मुत्व दृश्यते । अ से यस्येति बहुव्रीहिणा प्रतीयत इति योजना । **विष्वग्देवयोः किमिति** ॥ विष्वग्देवयोश्चेति किमर्थमित्यर्थ । **अश्वाचीति** ॥ अत्र विष्वग्देवयोस्सर्वनाम्नश्चाभावान्नाद्र्यादेश इति भाव । **अप्रत्यये किम् । विष्वगञ्चनमिति** ॥ अत्र अन इति ल्युडादेशस्य श्रूयमाणतया अञ्चेरप्रत्यया-

धातुग्रहणे तदादिविधिः' इति। तेनायस्कारः। 'अतः कृकमि—' (सू १६०) इति सः। उदङ्, उदञ्चौ, उदञ्चः। शसादावचि।

### ४२०। उद ईत्। (६-४-१३९)

उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत्स्यात्। उदीचः। उदीचा। उदग्भ्यामित्यादि।

### ४२१। समः समि। (६-३-९३)

अप्रत्ययान्तेऽञ्चतौ परे समः समिरादेशः स्यात्। सम्यङ्, सम्यञ्चौ, सम्यञ्चः। समीचः। समीचा।

### ४२२। सहस्य सध्रिः। (६-३-९५)

अप्रत्ययान्तेऽञ्चतौ परे। सध्र्यङ्।

### ४२३। तिरसस्तिर्यलोपे। (६-३-९४)

अलुप्ताकारेऽञ्चतावप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात्। तिर्यङ्, तिर्यञ्चौ, तिर्यञ्चः। तिर्यञ्चम्, तिर्यञ्चौ, तिरश्चः। तिरश्चा, तिर्यग्भ्यामित्यादि।

---

न्तत्वन्नेति भावः। ननु उत्तरपदाधिकारादञ्चुरूपे उत्तरपदे इत्यर्थाद्विष्वगञ्चनमित्यत्र अद्र्यादेशस्याप्रसक्तेः किमप्रत्ययग्रहणेनेत्यत आह। **अप्रत्ययग्रहणमिति**॥ **तेनेति**॥ अन्यथा 'अतः कृकमि' इत्यत्र 'नित्यं समासे' इत्यतोऽनुवृत्तसमासग्रहणेन उत्तरपदाक्षेपात् कृधातुरूपे उत्तरपदे इत्यर्थलाभादयस्कृदित्यत्रैव सत्वं स्यात्, अयस्कार इत्यत्र न स्यादित्यर्थः। **उदङिति**॥ उत् अञ्चतीति विग्रहे क्विन्नादिरिति भावः। शसादौ 'अचः' इति लोपे प्राप्ते। **उद ईत्**॥ 'अचः' इति सूत्रमनुवर्तते, अल्लोप इति च। भस्येत्यधिकृतम्। तदाह। **उच्छब्दादित्यादिना**॥ उत् अञ्चतीति विग्रहे क्विन्नादि। **समः समि**॥ समीति लुप्तप्रथमाकम्। अञ्चतावप्रत्यय इत्यनुवर्तते। तदभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे। **अप्रत्ययेति**॥ **समीचः इति**॥ 'अचः' इति लोपे 'चौ' इति दीर्घः। **सहस्य सध्रिः**॥ सहस्य सध्रिः स्यादप्रत्ययान्ते अञ्चतौ परे इति व्याख्यानं सुगमत्वादुपेक्षितम्। **सध्र्यङिति**॥ सह अञ्चतीति विग्रहे क्विन्नादि पूर्ववत्। सहस्य सध्र्यादेशे यण्। **तिरसस्तिर्यलोपे**॥ तिरि इति लुप्तप्रथमाकम्। अञ्चतावप्रत्यये इत्यनुवर्तते। न विद्यते 'अचः' इत्यल्लोपो यस्य सः अलोपः, तस्मिन्निति विग्रहः। तदाह। **अलुप्तेत्यादिना**। **तिर्यङिति**॥ तिरः अञ्चतीति विग्रहे क्विन्नादि। तिरसस्तिर्यादेशे यण्। **तिरश्चः इति**॥ शसादावचि 'अचः' इत्यल्लोपसत्वान्न तिर्यादेशः। सस्य श्चुत्वेन शः इति भावः। पुजार्थादञ्चुधातोः क्विनि 'अनिदिताम्' इति नलोपे

## ४२४ । नाञ्चेः पूजायाम् । (६-४-३०)

पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न स्यात् । अलुप्तनकारत्वान्न नुम् । प्राङ्, प्राञ्चौ, प्राञ्च । नलोपाभावादकारलोपो न । प्राञ्च । प्राञ्चा, प्राङ्भ्याम् इत्यादि । प्राङ्ख्षु--प्राङ्क्षु--प्राङ्षु । एवं पूजार्थे प्रत्यङ्ङादयः । 'क्रुञ्च कौटिल्याल्पीभावयोः' । अस्य 'ऋत्विग्—' (३७३) आदिना नलोपाभावो-ऽपि निपात्यते । क्रुङ्, क्रुञ्चौ, क्रुञ्च । क्रुङ्भ्यामित्यादि । 'चो. कु.'

प्राप्ते । **नाञ्चेः** ॥ 'अनिदिताम्' इति सूत्रात् उपधाया क्ङितीत्यनुवर्तते । 'श्नान्न लोपः' इत्यतो नलोप इत्यनुवर्तते । तत्र नेति लुप्तषष्ठीकम् । तदाह । **पूजार्थस्येत्यादिना** ॥ पूजाया गम्यत्वे सतीत्यर्थः । न त्वत्राञ्चुधातोः पूजार्थत्वमेव इह विवक्षितम् । अत एव अञ्चित गच्छति इत्यत्र नलोपो न । अञ्चतेरत्र समाधानमर्थः । समाहितो भूत्वा गच्छतीति गम्यते । समाधानञ्च अव्याकुलत्वम्, अव्याकुलं गच्छतीत्यर्थः । अव्याकुलगमने च पूजा गम्यते । न त्वञ्चतेरेव सोऽर्थ इति 'अञ्चोऽनपादाने' इति सूत्रे भाष्यकैयटयोः स्पष्टम् । **प्राङिति** ॥ प्रपूर्वादञ्चतेः क्विन् । प्रकर्षेण पूजनमञ्चेरर्थः । नलोपाभावे प्राञ्च् इत्यतस्सुबुत्पत्तिः । हल्ङ्यादि-लोपः, संयोगान्तलोपः, ततः अनुस्वारपरसवर्णनिवृत्तौ नकारस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन ङकार इति भावः । **प्राञ्चाविति** ॥ स्वाभाविकनकारस्य अनुस्वारपरसवर्णाविति भावः । **अलुप्तेति** ॥ 'उगिदचाम्' इत्यत्र नलोपिनोऽञ्चतेरेव ग्रहणान्नुम् न । ततश्च नकारद्वयश्रवणं न शङ्क्यमिति भावः । **नलोपाभावादिति** ॥ शसादावचि 'अचः' इति लोपो न भवति । लुप्तनकारस्यैवाञ्चतेस्तत्र ग्रहणादिति भावः । **प्राञ्चः इति** ॥ प्र अञ्च् अस् इति स्थिते सवर्णदीर्घे रूपमिति भावः । 'नाञ्चेः पूजायाम्' इत्यनारम्भे सुटि नुमैव रूपसिद्धावपि शसादावचि नकारश्रवणं न स्यात् । 'अनिदिताम्' इति लोपप्रसङ्गात् । असर्वनामस्थानतया 'उगिदचाम्' इति नुमश्चाप्रसक्तेरिति बोध्यम् । **प्राङ्भ्यामिति** ॥ 'स्वादिषु' इति पदत्वात् चकारस्य संयोगान्तलोपे अनुस्वारपरसवर्णनिवृत्तौ नकारस्य 'क्विन्प्रत्ययस्य' इति कुत्वेन ङकार इति भावः । **इत्यादीति** ॥ प्राङ्भिः । प्राञ्चे, प्राङ्भ्याम्, प्राङ्भ्यः । प्राञ्चः, प्राञ्चोः, प्राञ्चाम् । प्राञ्चि, प्राञ्चोः । **प्राङ्ख्ष्वति** ॥ 'ङ्णोः कुक्टुक्' इति वा कुक् । 'चयो द्वितीयाः' इति पक्षे खश्च बोध्यः । **एवमिति** ॥ सुटि पूर्ववदेव रूपाणि । शसादावचि प्रत्यञ्चः, प्रत्यञ्चा, प्रत्यङ्भ्याम् । अमुमुयञ्चः । अमुमुयङ्भ्याम् । उदञ्चः । उदङ्भ्यामित्यादि ज्ञेयम् । **क्रुञ्च कौटि-ल्येति ॥ नलोपाभावोऽपीति** ॥ 'अनिदिताम्' इति नलोपाभावः, निरुपपदात् क्विन्नपि निपात्यत इत्यर्थः । सति तु नलोपे नकारो न श्रूयेत । 'उगिदचाम्' इति नुमस्सर्वनामस्थानेऽप्यप्रवृत्तेः । वस्तुतस्तु स्वभाविकञोपधस्यैव धातुपाठे निर्देशात् नलोपस्यात्र प्रसक्तिरेव नास्ति । अत एव 'परेश्च घाङ्कयोः' इति सूत्रे भाष्ये क्रुञ्चेत्यत्र चकारे परे 'चोः कुः' इति कुत्वमाशङ्क्य ऋत्विगादिसूत्रे क्रुञ्चेति निपातनात् कुत्वन्नेत्युक्तं सङ्गच्छते । यदि तु तस्यानुस्वारपरस-वर्णाभ्यां ञकारो निर्दिश्येत, तर्हि तस्य 'चोः कुः' इति कुत्वप्रसक्तिरेव नास्तीति तदसङ्गतिः

(सू ३७८) पयोमुक्–पयोमुग्, पयोमुचौ, पयोमुच । 'व्रश्च—' (२९४) इति षत्वम् । 'स्को —' (सू ३८०) इति सलोप । जश्त्वचर्त्वे । सुवृट्–सुवृड्, सुवृश्चौ, सुवृश्च । सुवृट्त्सु–सुवृट्सु ।

इति चान्ता ।

## ॥ अथ हलन्तपुल्लिँङ्गे तकारान्तप्रकरणम् ॥

'वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च' (उ २४१) एते निपात्यन्ते, शतृवच्चैषां कार्यं स्यात्। उगित्त्वान्नुम्। 'सान्तमहत —' (सू ३१७) इति दीर्घ. । मह्यते पूज्यत इति महान्, महान्तौ, महान्त । हे महन् । महत । महता, महद्भ्यामित्यादि ।

स्यात्। कुत्वे कर्तव्ये परसवर्णस्यासिद्धत्वादित्यास्ता तावत्। नोपधत्वमभ्युपेत्य आह। **क्रुङिति** ॥ हल्ङ्यादिलोपे सयोगान्तलोपे ञकारस्य 'चो कु' इति कुत्वम् । 'क्विन्प्रत्ययस्य' इत्यस्या सिद्धत्वात् । **क्रुञ्भ्यामिति** ॥ सयोगान्तलोपे ञकारस्य 'चो कु' इति कुत्व ङकार । अत्र प्रथमैकवचने भ्यामादावपि कुत्व निपातनादेव न भवति। चवर्गपञ्चमञकार एव सर्वत्रेति 'परेश्च घाङ्कयो' इति सूत्रे भाष्यकैयटस्वरस । **पयोमुगिति** ॥ 'मुच्लृ मोक्षणे' क्विप् । सुपूर्वात् 'ओ व्रश्चू छेदने' इति धातो क्विपि 'ग्रहिज्या' इति सम्प्रसारणे सुव्रश्चूशब्द । तस्य विशेषमाह । **व्रश्चेति षत्वमिति** ॥ हल्ङ्यादिना सुलोपे कृते चकारस्य षत्व मित्यर्थ । **सलोप· इति** ॥ धातुपाठे व्रश्च् इति सस्य श्चुत्वे कृते व्रश्चू इति निर्देश । तत्र श्चुत्वस्यासिद्धत्वात् 'स्को' इति सकारस्य लोप इत्यर्थ । 'वावसाने' इति चर्त्वे षस्य ट । तदभावे जश्त्वेन ड इत्यर्थ । **सुवृट्त्स्विति** ॥ चर्त्वस्यासिद्धत्वात् पूर्व 'ड सि' इति वा धुट्। ततश्चर्त्वमिति भाव ॥

इति चान्ता ।

अथ तकारान्ता निरूप्यन्ते । अथ महच्छब्दे विशेष वक्तुमाह । **वर्तमाने** ॥ उणादिसूत्रमेतत् । **निपात्यन्ते इति** ॥ तत्र 'पृष सेचने' 'बृहि वृद्धौ' अनयोर्गुणाभाव, महे कर्मणि अतिप्रत्यय, गमेर्जगादेशश्चेति विशेष । **शतृवदिति** ॥ शतृप्रत्ययान्तवदित्यर्थ । **उगित्त्वादिति** ॥ शतृवद्भावेन सुटि उगित्त्वान्नुमित्यर्थ । **सान्तेति** ॥ सुटि महन्त्स् इत्यादिस्थिते नकारात् पूर्वस्य अकारस्य दीर्घ इत्यर्थ । **मह्यते इति** ॥ 'कर्तरि कृत्' इति कर्त्रर्थं बाधित्वा निपातनात् 'मह पूजायाम्' इति धातो कर्मणि अतिप्रत्यय इति

## ४२५ । अत्वसन्तस्य चाधातोः । (६-४-१४)

अत्वन्तस्योपधाया दीर्घ स्याद्धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे । परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घ । ततो नुम् । धीमान, धीमन्तौ, धीमन्त । हे धीमन । शसादौ महद्वत् । धातोरप्यत्वन्तस्य दीर्घ । गोमन्तमिच्छति, गोमानिवाचरतीति वा क्यजन्तादाचारक्विबन्ताद्वा कर्तरि

भाव । **महानिति** ॥ नुमि दीर्घे सुलोपे सयोगान्तलोप इति भाव । **महान्ताविति** ॥ नुमि दीर्घे अनुस्वारपरसवर्णाविति भाव । **हे महन्निति** ॥ असम्बुद्धावित्यनुवृत्ते 'सान्त-महत' इति दीर्घो नेति भाव । **महत इति** ॥ असर्वनामस्थानत्वाच्छसादौ न दीर्घ । धी अस्यास्तीत्यर्थे धीशब्दान्मतुप्, पकार इत्, उकार उच्चारणार्थ । तद्धितान्तत्वेन प्रातिपदिकत्वात् सुबुत्पत्ति । धीमत् स् इति स्थिते । **अत्वसन्तस्य** ॥ अतु इति लुप्तषष्ठीक पृथक्पदम् । अङ्गविशेषणत्वात्तदन्तविधि । अधातोरित्यसन्तविशेषणम् । 'नोपधाया' इत्यत उपधाया इत्यनुवर्तते । अत्वन्तस्य धातुभिन्नासन्तस्य चेति लभ्यते । 'सर्वनामस्थाने चासम्बुद्धौ' इत्यत असम्बुद्धाविति । 'सौ च' इत्यतस्साविति 'ढ्रलोपे' इत्यतो दीर्घ इति च । तदाह । **अत्वन्तस्येत्यादिना** ॥ ननु कृते अकृते च दीर्घे प्रवृत्त्यर्हस्य नुमो नित्यत्वात् परत्वाच्च मकाराकारात् नुमि कृते अत्वन्तत्वाभावात् कथमिह दीर्घ इत्यत आह । **परमिति । वचनसामर्थ्यादिति** ॥ अन्यथा निरवकाशत्वापत्तिरिति भाव । **ततो नुमिति** ॥ दीर्घे कृते नुमित्यर्थ । 'विप्रतिषेधे यद्बाधितन्तद्बाधितम्' इति त्वनित्यम् । 'पुन प्रसङ्गविज्ञानात् सिद्धम्' इत्युक्तेरिति भाव । **धीमानिति** ॥ दीर्घे नुमि हल्ङ्यादिलोपे सयोगान्तलोपे रूपमिति भाव । **हे धीमन्निति** ॥ असम्बुद्धौ इत्युक्ते न दीर्घ इति भाव । **महद्वदिति** ॥ असर्वनामस्थानतया शसादौ नुमभावादिति भाव । अत्वसोरिति वक्तव्ये अन्तग्रहणन्तु अन्तमात्रग्रहणार्थम् । अन्यथा उपदेशे ये अत्वन्तास्त एव गृह्येरन्, न तु मतुबादय । नह्येते उपदेशे अत्वन्ता इत्याहु । नन्वधातोरित्येतत् असन्तस्येव अत्वन्तस्यापि विशेषण कुतो नेत्यत आह । **धातोरपीति** ॥ अत्वन्तधातुत्वेऽपि दीर्घार्थम् अधातोरित्येतस्य अत्वन्तविशेषणत्वन्नाश्रितमित्यर्थ । ननु धातुपाठे अत्वन्तधातुरप्रसिद्ध इत्यत आह । **गोमन्तमिति** ॥ आचरति वेत्यनन्तरम् इत्यर्थे इति शेष । गोमन्तमिच्छतीत्यर्थे 'सुप आत्मन क्यच्' इति क्यचि 'न क्ये' इति नियमात् पदत्वाभावाज्जश्त्वाभावे गोमत्यशब्दात् 'सनाद्यन्ता' इति धातुत्वात् कर्तरि क्विपि अतो लोप । 'यस्य हल' इत्यल्लोपयलोपयो गोमत्शब्दात् सुबुत्पत्ति । गोमानिवाचरतीत्यर्थे तु 'सर्वप्रातिपदिकेभ्य क्विब्वा वक्तव्य' इति क्विपि 'सनाद्यन्ता' इति धातुत्वात् कर्तरि क्विपि सुबुत्पत्तिरिति भाव । एवंविधात् गोमत्शब्दात् सौ 'अत्वसन्तस्य' इति दीर्घे सति 'उगिदचाम्' इति नुमि हल्ङ्यादिलोपे गोमानिति रूप वक्ष्यति । तत्र गोमच्छब्दस्य क्यजन्तस्य आचारक्विबन्तस्य च 'सनाद्यन्ता' इति धातुत्वात् कथमस्य 'उगिदचाम्' इति नुमागम । अधातोरेव उगितो नुम्विधानादित्याशङ्क्य आह ।

क्विप्। उगिदचाम्—' (सू ३६१) इति सूत्रेऽज्ग्रहणं नियमार्थम्। 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव' इति। तेन 'स्रत्' 'ध्वत्' इत्यादौ न। 'अधातो' इति त्वधातुभूतपूर्वस्यापि नुमर्थम्। गोमान्, गोमन्तौ, गोमन्त इत्यादि। 'भातेर्डवतु.' (उ ६३)। भवान्, भवन्तौ, भवन्त.। शत्रन्तस्य त्वत्वन्तत्वाभावान्न दीर्घ। भवतीति भवन्।

## ४२६। उभे अभ्यस्तम्। (६-१-५)

---

**उगिदचामिति सूत्रे इति**॥ उगितस्सर्वनामस्थाने इत्येतावदेव सूत्रमस्तु। अञ्चतेरुगित्त्वादेव सिद्धे। अत अज्ग्रहणमतिरिच्यमानन्नियमार्थमित्यर्थ। नियमशरीरमाह। **धातोश्चेदिति**॥ धातोश्चेदुगित कार्यं स्यात् तर्हि अञ्चतेरेव नतु धात्वन्तरस्येति नियमार्थम्, इति पूर्वेणान्वय। नियमस्य फलमाह। **तेनेति**॥ 'स्रन्सु ध्वन्सु गतौ' इत्युगितौ धातू। ताभ्या क्विपि 'अनिदिता हल उपधाया' इति नलोपे सुबुत्पत्तौ सोर्हल्ङ्यादिलोपे 'वसुस्रसुध्वस्वनडुहा द' इति दत्वे स्रत् ध्वत् इति रूपमिष्टम्। उगितस्सर्वनामस्थाने इत्युक्ते तु अत्रापि नुम् स्यात्। कृते त्वज्ग्रहणे उक्तनियमलाभादत्र नुम् न भवतीत्यर्थ। तर्ह्येतावतैव सिद्धे अधातोरिति किमर्थमित्यत आह। **अधातोरिति त्विति**॥ अधातु पूर्व भूत अधातुभूतपूर्वं, पूर्व अधातुभूतस्यापि नुमर्थमधातोरित्येतदित्यर्थ। ततश्च उगिदचा सर्वनामस्थाने, इत्येक वाक्यम्। तत्र अधातोरित्यभावेऽपि अज्ग्रहणादधातोरुगित इति लाभादधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमस्स्यादित्यर्थ। अधातोरित्यपर वाक्यम्। उक्तो नुमागम अधातुभूतपूर्वस्यापि भवतीत्यर्थ। प्रकृते च क्यजाचारक्विबुत्पत्त्यनन्तर धातुत्वे सत्यपि क्यजाद्युत्पत्ते पूर्व अधातुत्वसत्वान्नुम् निर्बाध इत्यर्थ। एतत् सर्व 'उगिदचाम्' इति सूत्रे भाष्ये स्पष्टम्। अत्र क्यच्पक्षे दीर्घे नुमि च कर्तव्ये अल्लोपो न स्थानिवत्। दीर्घविधौ तन्निषेधात् क्वौ लुप्त न स्थानिवदित्युक्तेश्च। अथ भवच्छब्दे विशेषमाह। **भातेर्डवतुरिति**॥ उणादिसूत्रमेतत्। भाधातोर्डवतुस्स्यादित्यर्थ। डकार इत्। उकार उच्चारणार्थ। डित्त्वसामर्थ्यादभस्यापि टेर्लोप। भवत् इति रूपम्। **भवानिति**॥ भवच्छब्दात् सु। 'अत्वसन्तस्य' इति दीर्घ, 'उगिदचाम्' इति नुम्, हल्ङ्यादिलोप, संयोगान्तलोपश्च इति भाव। **शत्रन्तस्य त्विति**॥ 'लटश्शतृशानचौ' इति भूधातोर्लट शतृ आदेश। शकार इत्। ऋकार इत्, शप्, गुण, अवादेशश्च, पररूपम्, भवत् इति रूपम्। तस्य तु अत्वन्तत्वाभावादत्वसन्तस्येति दीर्घो न भवति। तत्र उकारानुबन्धग्रहणादित्यर्थ। **भवन्निति**॥ सौ नुमि हल्ङ्यादिलोपे संयोगान्तलोप। भवन्तावित्यादि तु पूर्ववदेवेति भाव। दाञ्धातो लटश्शत्रादेशे शप्। 'जुहोत्यादिभ्य श्लु'। 'श्लौ' इति द्वित्वत्, अभ्यासह्रस्व, 'श्नाभ्य स्तयोरात' इत्याल्लोप। ददत् इति रूपम्। ततस्सुबुत्पत्ति। 'उगिदचाम्' इति नुमि प्राप्ते 'नाभ्यस्तात्' इति तन्निषेध वक्ष्यन् अभ्यस्तसंज्ञामाह। **उभे अभ्यस्तम्**॥ 'एकाचो

षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्त. ।

## ४२७ । नाभ्यस्ताच्छतुः । (७-१-७८)

अभ्यस्तात्परस्य शतुर्नुम् न स्यात् । ददत्—ददद्, ददतौ, ददत ।

## ४२८ । जक्षित्यादयः षट् । (६-१-६)

षड् धातवोऽन्ये जक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञा स्यु । जक्षत्—जक्षद्, जक्षतौ, जक्षत । एव जाग्रत्, दरिद्रत्, शासत्, चकासत् । दीधीवेव्योर्ङित्त्वेऽपि छान्दसत्वाद्व्यत्ययेन परस्मैपदम् । दीध्यत् । वेव्यत् ।

इति तान्ता ।

---

द्वे प्रथमस्य' इत्यतो द्वे इत्यनुवर्तते । उभेग्रहण समुदायप्रतिपत्त्यर्थम् । द्वे इत्यनेन च षष्ठाध्यायविहितमेव द्वित्व विवक्षितम् । 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायात् । तदाह । **षाष्ठेत्यादिना** ॥ समुदिते किम्, नेनिजतीत्यत्र प्रत्येकमभ्यस्तसज्ञायाम् 'अभ्यस्तानामादि' इत्युदात्त प्रत्येक स्यात् । **नाभ्यस्ताच्छतु.** ॥ 'इदितो नुम् धातो' इत्यतो नुमित्यनुवर्तते । तदाह । **अभ्यस्तादित्यादिना** ॥ **ददिति** ॥ ददत्शब्दात् सु । हल्ङ्यादिलोप । 'नाभ्यस्तात्' इति निषेधात् 'उगिदचाम्' इति नुम् न । अत्वन्तत्वाभावाच्च न दीर्घ इति भाव । 'जक्ष भक्षणहसनयो, जागृ निद्राक्षये, दरिद्रा दुर्गतौ, चकासृ दीप्तौ, शासु अनुशिष्टौ, दीधीङ् दीप्तिदेवनयो, वेवीङ् वेतिना तुल्ये' इति सप्त धातव अदादौ पठिता लुग्विकरणा । तेभ्यो लटश्शत्रादेशे शब्लुकि सुबुत्पत्तौ 'नाभ्यस्ताच्छतु' इति निषेध इष्यते । अभ्यस्तसज्ञायाश्च द्वित्वनिबन्धनत्वादिहाप्राप्ताविदमारभ्यते । **जक्षित्यादय षट्** ॥ अभ्यस्तमित्यनुवृत्त बहुवचनान्ततया विपरिणम्यते । तत्र जक्षिति आदिर्येषामिति तद्गुणसंविज्ञानबहुव्रीहौ सति जक्षधातुमारभ्य षण्णामेव स्यात्, वेवीङो न स्यात् । अतद्गुणसंविज्ञानबहुव्रीहौ तु जागृ इत्यारभ्य षण्णा ग्रहण स्यात्, नतु जक्षे । अतो व्याचष्टे । **षड् धातवोऽन्ये जक्षितिश्च सप्तमः इति** ॥ अत्र विवरणवाक्ये जक्षितिरिति श्तिपा निर्देश, जक्षधातुरित्यर्थ । 'रुदादिभ्य सार्वधातुके' इति इडागमे रूपम् । सूत्रे जक्ष् इति पृथक्पदम् । इतिना जाक्षि परामृश्यते । इति आदि येषामित्यतद्गुणसंविज्ञानबहुव्रीहि । ततश्च इत्यादयष्षट् इत्यनेन जक्षधातो अन्ये जागृ इत्यारभ्य षड् धातवो विवक्षिता । चशब्द अध्याहार्य । एवञ्च जक्षधातुश्च जागृधातुमारभ्य षड् धातवश्चेत्येव सप्त धातव अभ्यस्तसज्ञका स्युरिति फलतीत्यर्थ । तदिद भाष्ये स्पष्टम् । **जक्षदिति** ॥ अभ्यस्तत्वान्नुम्निषेध इति भाव । ननु दीधीवेव्योर्ङित्त्वात् 'अनुदात्तङित आत्मनेपदम्' इति, आत्मनेपदसज्ञक एव लटश्शानजादेशस्स्यात्, न तु शत्रादेश इत्यत आह । **दीधीवेव्योरिति** ॥ दीधीवेव्यो छन्दोमात्रविषयत्व तिङन्ताधिकारे वक्ष्यते । ततश्च 'व्यत्ययो बहुलम्' इति छान्दस परस्मैपदम् । अतश्शानजसम्भवात् शत्रादेश एवेत्यर्थ । **दीध्यत् । वेव्यदिति** ॥ दीधी, वेवी, इत्याभ्या लटश्शत्रादेशे कृते शब्लुकि यणादेश । अभ्यस्तत्वाच्च नुम् नेति भाव ॥ इति तान्ता ।

## ॥ अथ हलन्तपुल्लिँङ्गे पकारान्तप्रकरणम् ॥

गुप्—गुब्, गुपौ, गुप. । गुब्भ्यामित्यादि ।

इति पान्ता ।

## ॥ अथ हलन्तपुल्लिँङ्गे शकारान्तप्रकरणम् ॥

### ४२९ । त्यदादिषु दृशोऽनालोचने कञ्च । (३-२-६०)

त्यदादिषूपपदेष्वज्ञानार्थाद्दृशेर्धातो कञ् स्यात्, चात् क्विन् ।

### ४३० । आ सर्वनाम्नः । (६-३-९१)

सर्वनाम्न आकारोऽन्तादेशः स्याद्दृग्दृशवतुषु । कुत्वस्यासिद्धत्वात् 'व्रश्च—' (सू २९४) इति ष । तस्य जश्त्वेन ड । तस्य कुत्वेन ग । तस्य चर्त्वेन पक्षे क. । तादृक्—तादृग्, तादृशौ, तादृश । 'षत्वापवादत्वात्कुत्वेन खकार'

---

अथ पकारान्ता निरूप्यन्ते। **गुबिति**॥ 'गुपू रक्षणे' क्विप्। 'आयादय आर्धधातुके वा' इति वैकल्पिकत्वादायप्रत्ययो नेति भाव । **गुब्भ्यामिति** ॥ 'स्वादिषु' इति पदत्वात् भ्यामादौ जश्त्वमिति भाव ॥

इति पान्ता ।

---

अथ शकारान्ता निरूप्यन्ते। तादृक्शब्द व्युत्पादयितुमाह। **त्यदादिषु** ॥ चकारात् 'स्पृशोऽनुदके क्विन्' इत्यत क्विन् अनुकृष्यते । आलोचनमिह ज्ञानसामान्य विवक्षितम् । तदाह । **त्यदादिष्वित्यादिना** ॥ अनालोचने किम् । त पश्यति तद्दर्श । 'कर्मण्यण् ।' कञि तु कित्त्वात् गुणो न स्यात् । तद्शब्दे उपपदे क्विनि उपपदसमासे सुब्लुकि तद् दृश् इति स्थिते । **आ सर्वनाम्नः** ॥ आ इत्यविभक्तिकनिर्देश । 'दृग्दृशवतुषु' इति सूत्रमनुवर्तते । तदाह । **सर्वनाम्नः इति** ॥ **अन्तादेशः इति**॥ अलोऽन्त्यपरिभाषालभ्यम् । दकारस्य आत्वे सवर्णदीर्घ । तादृश् इति रूपम् । ततस्सुबुत्पत्ति । **कुत्वस्येति** ॥ तादृश् स् इति स्थिते हल्ङ्यादिलोपे 'क्विन्प्रत्ययस्य कु' इति कुत्वस्यासिद्धत्वात् 'व्रश्च' इति ष इत्यर्थ । **तस्येति** ॥ 'व्रश्च' इति सम्पन्नस्य षकारस्येत्यर्थ । **तस्य कुत्वेनेति** ॥ डकारस्य 'क्विन्प्रत्ययस्य कु' इति कुत्वेन गकार इत्यर्थ । **तस्य चर्त्वेनेति** ॥ गकारस्य 'वावसाने' इति चर्त्वविकल्प इत्यर्थ । **तादृगिति** ॥ स इव दृश्यत इति न विग्रह । 'कर्तरि कृत्' इति कर्तर्येव क्विन्वि-

इति कैयटहरदत्तादिमते तु चर्त्वाभावपक्षे ख एव श्रूयते, न तु ग, जश्त्व प्रति कुत्वस्यासिद्धत्वान् । 'दिगादिभ्यो यत्' (सू १४२९) इति निर्देशान्नासिद्धत्वमिति वा बोध्यम् । 'व्रश्च—' (सू २९४) इति षत्वम्, जश्त्वचर्त्वे । विट्—विड्, विशौ, विश । विशम ।

## ४३१ । नशेर्वा । (८-२-६३)

नशे कवर्गोऽन्तादेशो वा स्यात्पदान्ते । नक्--नग् । नट्--नड्, नशौ, नश , । नग्भ्याम्--नड्भ्यामित्यादि ।

---

धानात् । किन्तु कर्मकर्तरि क्विन् । स इवाय पश्यति, ज्ञानविषयो भवतीत्यर्थ । "दृशेरत्र ज्ञानविषयत्वापत्तिमात्रवृत्तित्वादज्ञानार्थता" इति 'त्यदादिषु दृश' इति सूत्रे भाष्ये स्पष्टम् । रूढशब्द एवायमित्यन्ये । अथात्र कैयटादिमत दूषयति । **षत्वापवादत्वादिति** ॥ यद्यपि दधृगञ्चुयुजिक्रुञ्चुषु अप्राप्तेऽपि व्रश्चादिषत्वे 'क्विन्प्रत्ययस्य कु' इति कुत्वमारभ्यते । तथापि क्विपैव सिद्धे 'स्पृशोऽनुदके क्विन्, त्यदादिषु दृशोऽनालोचने कञ्च च' इति क्विन्विधान 'क्विन्प्रत्ययस्य कु' इति कुत्वार्थं क्रियमाण घृतस्पृक्, तादृक्, इत्यादिषु अप्रवृत्तौ निरवकाशमेव स्यात् । अतस्तद्विषये कुत्वस्य फलतष्षत्वापवादत्वमिति भाव । "क्विन्विधान 'क्विन्प्रत्ययस्य कु' इति कुत्वार्थमेव" इति 'स्पृशोऽनुदके' इति सूत्रे भाष्ये स्पष्टम् । अनवकाशत्वादेव च शकारविषये कुत्वस्य नासिद्धत्वमपि । अन्यथा 'स्पृशोऽनुदके क्विन्' इत्यादिना स्पृशादे क्विन्विधिवैयर्थ्यात् । उक्तञ्च । 'पूर्वत्रासिद्धम्' इत्यत्र भाष्ये "अपवादो वचनप्रामाण्यात्" इति । **खकारः इतीति** ॥ अघोषमहाप्राणसाम्यादिति भाव । **ख एवेति** ॥ तादृक्, तादृग्, इति रूपद्वयमिष्टम् । शकारस्य कुत्वेन खकारे सति तस्य 'वावसाने' इति चर्त्वपक्षे तादृक् इति रूपसिद्धावपि चर्त्वाभावपक्षे तादृख् इत्येव स्यात्, तादृग् इति गकारो न श्रूयेतेत्यर्थ । नन्वस्तु शकारस्य खकार । अथापि तस्य चर्त्वाभावपक्षे जश्त्वेन गकारो निर्बाध इत्यत आह । **जश्त्वं प्रतीति** ॥ जश्त्वेन गकारे कर्तव्ये शकारस्थानकस्य कुत्वसम्पन्नखकारस्यासिद्धतया झलोऽभावेन जश्त्वासम्भवादित्यर्थ । अथ कैयटादिमते उक्तदोष निरस्यति । **दिगादिभ्यो यदितीति** ॥ 'विश प्रवेशने' क्विप्, विश् इति रूपम् । तस्य विशेषमाह । **व्रश्चेति षत्वमिति** ॥ विश् स् इति स्थिते हल्ङ्यादिलोपे 'व्रश्च' इति शकारस्य षकार इत्यर्थ । **जश्त्वचर्त्वे इति** ॥ षस्य जश्त्वेन ड । 'वावसाने' इति तस्य चर्त्वेन पक्षे ट इत्यर्थ । विड्भ्याम् । विट्त्सु–विट्सु । 'णश अदर्शने' क्विप् । नश् इति रूपम् । ततस्सुबुत्पत्ति । सोर्हल्ङ्यादिलोपे व्रश्चादिना नित्य षत्वे प्राप्ते । **नशेर्वा** ॥ 'क्विन्प्रत्ययस्य कु' इत्यत. कुरित्यनुवर्तते, 'स्कोस्सयोगाद्यो' इत्यत अन्ते इति च। 'पदस्य' इत्यधिकृतम् । तदाह । **नशेः कवर्गः इत्यादिना** ॥ अन्तादेश इत्यलोऽन्त्यसूत्रलभ्यम् । पक्षे 'व्रश्च' इति षत्वम् । **नक्–नगिति** ॥ कुत्वपक्षे जश्त्वचर्त्वाभ्या रूपे । **नट्–नडिति** ॥ षत्वपक्षे जश्त्वचर्त्वाभ्या रूपे ।

इति निषेधाद्रत्वाभावे रु, तस्यासिद्धत्वान्नान्तलक्षण उपधादीर्घे । सम्बुद्धौ तु हे दीर्घाहो निदाघ, दीर्घाहाणौ, दीर्घाहाण । दीर्घाह्ना । दीर्घाहोभ्याम् । दण्डि, दण्डिनी, दण्डीनि । स्रग्वि, स्रग्विणी, स्रग्वीणि । वाग्मि, वाग्मिनी, वाग्मीनि । बहुवृत्रह बहुवृत्रघ्नी–बहुवृत्रहणी, बहुवृत्रहाणि । बहुपूष, बहुपूष्णी–बहुपूषणी, बहुपूषाणि । बह्वर्यम, बह्वर्यम्णी–बह्वर्यमणी, बह्वर्यमाणि ।

इति नान्ता ।

दीर्घाहन्शब्दात् पुल्लिङ्गात् सौ परत्वादुपधादीर्घे कृते हल्ङ्याब्भ्यो इत्यादिना सुलोपे । 'अहन्' इति रुत्वे, 'भोभगो' इत्यपूर्वत्वाद्यत्वे, 'हलि सर्वेषाम्' इति यलोपे, रूपमिति भाव । ननु सुलोपे कृते 'रोऽसुपि' इति रत्वे तस्य यत्वन्न भवति । यत्वविधौ रो इत्युकारानुबन्धग्रहणात् । तथाच दीर्घाहर्निदाघ इत्येव युक्तमित्यत आह । **इह हल्ङ्यादीत्यादि** ॥ ननु नान्तलक्षणदीर्घस्य परत्वेऽपि अकृतव्यूहपरिभाषया हल्ङ्यादिलोपात् प्राक् प्रवृत्तिर्न सम्भवति । रुत्वेन नकारस्य विनाशोन्मुखत्वादित्यत आह । **तस्यासिद्धत्वादिति** ॥ प्रवृत्तस्य रुत्वस्यासिद्धत्वान्नान्तलक्षणो दीर्घो निर्बाध इति भाव । वस्तुतस्तु अकृतव्यूहपरिभाषाया निर्मूलत्वादिह हल्ङ्यादिलोपात् पूर्वमेव परत्वादुपधादीर्घ इत्येवोचितमित्यलम् । **सम्बुद्धौ त्विति** ॥ सोरत्र हल्ङ्यादिलोपात् प्रत्ययलक्षणमाश्रित्य 'असम्बुद्धौ' इति प्रवृत्ते उपधादीर्घाभावे रुत्वे, 'हशि च' इत्युत्वे, आद्गुणे, हे दीर्घाहो निदाघ इति रूपमित्यर्थ । अत्र 'रोऽसुपि' इति रत्वविधेस्तदन्तेऽपि प्रवृत्तौ फलन्तु नपुसके दीर्घाहर्निदाघजालमित्यादि बोध्यम् । **दण्डीति** ॥ दण्डोऽस्यास्तीत्यर्थे 'अत इनिठनौ' इति इनि, दण्डिन्शब्दात् स्वमोर्लुक्, नस्य लोप इति भाव । **दण्डिनी इति** ॥ औङश्शी । असर्वनामस्थानत्वात् 'इन्हन्' इति नियमाच्च न दीर्घ इति भाव । **दण्डीनीति** ॥ जश्शसो शि 'इन्हन्' इति दीर्घ इति भाव । **स्रग्वीति** ॥ 'अस्मायामेधास्रजो विनि' इति स्रज्शब्दात् मत्वर्थीयो विनि । स्रज् इत्यस्य अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वात् जस्य कुत्व, स्रग्विन्शब्दात् सुबुत्पत्ति । दण्डिवद्रूपाणि । अत्र इन अनर्थकत्वेऽपि 'इन्हन्' इत्यत्र ग्रहण भवत्येव । 'अनिनस्मन्' इति वचनादिति बोध्यम् । **वाग्मीति** ॥ 'वाचो ग्मिनि' इति ग्मिनि । तद्धितत्वान्न गकार इत्, चकारस्य जश्त्वम्, कुत्वम्, वाग्मिन्शब्दात् सुबुत्पत्ति, स्रग्विवद्रूपाणि । बहव वृत्रहण यस्मिन् मन्वन्तरे इति बहुव्रीहि । बहुवृत्रहन्शब्दात् स्वमोर्लुकि, नलोपे, बहुवृत्रहेति रूपम् । औङश्श्याम्, अल्लोपे, 'हो हन्ते' इति कुत्वे, वृत्रघ्नी इति रूपम् । 'अत्पूर्वस्य' इति नियमान्न णत्वम् । एतावत्सिद्धवत्कृत्य जश्शसोराह । **बहुवृत्रहाणीति** ॥ शे सर्वनामस्थानत्वेन तस्मिन् परे अल्लोपाभावात् 'इन्हन्' इत्युपधादीर्घे 'एकाजुत्तरपदे ण' इति णत्वमिति भाव । **बहुपूषाणीति** ॥ बहव पूषण यस्मिन्निति बहुव्रीहि । बहुपूष, बहुपूष्णी 'रषाभ्याम्' इति णत्वम् । जश्शसोस्तु शि, 'शौ' इति दीर्घ, 'अट्कुप्वाङ्' इति णत्वम् । **बह्वर्यमाणीति** ॥ बहव अर्यमणो यस्मिन्निति बहुव्रीहि बहुपूषवद्रूपाणि ॥

इति नान्ता ।

---

## ॥ अथ हलन्तनपुंसकलिङ्गे जकारान्तप्रकरणम् ॥

असृज· पदान्ते कुत्वम्, सृजे क्विनो विधानान् । विश्वसृडादौ तु न । 'सृजिदृशो —' (सू २४०५) इति सूत्रे 'रज्जुसृड्भ्याम्' इति भाष्यप्रयोगात्* । यद्वा 'व्रश्च—'(सू २९४) आदिसूत्रे सृजियज्यो पदान्ते षत्वं कुत्वापवाद । स्रगृत्विक्छब्दयोस्तु निपातनादेव कुत्वम् । असृक्छब्दस्तु अस्यतेरौ-

अथ जकारान्ता निरूप्यन्ते । शरीरं यदा उत्पद्यते तदैव सृज्यते न दन्तादिवन्मध्ये इत्यर्थे सृजधातो नञ्पूर्वात् सम्पदादित्वात् क्विप्, उपपदसमासे, 'नलोपो नञ' इति नकारलोपे, असृज्शब्द रक्तपर्याय नपुसकलिङ्ग । "रुधिरासृग्लोहितास्ररक्तक्षतजशोणितम्" इत्यमर । तस्य स्वमोर्लुकि विशेषमाह । **असृज· पदान्ते कुत्वमिति** ॥ 'क्विन्प्रत्ययस्य' इति कुत्वस्यासिद्धत्वात् 'चो कु' इति प्राप्त कुत्व बाधित्वा तदपवादे व्रश्चादिषत्वे कृते, तस्य 'क्विन्प्रत्ययस्य' इति कुत्वेन खकार, अघोषश्वासविवारमहाप्राणत्वसाम्यादित्यर्थ । नच षत्वस्य निरवकाशत्व शङ्क्यम् । सृष्टमित्यादौ अपदान्ते 'क्विन्प्रत्ययस्य कु' इति कुत्वाभावस्थले षत्वस्य चरितार्थत्वात् । ननु क्विन्नन्तत्वाभावादिह 'क्विन्प्रत्ययस्य' इति कुत्व कुत इत्यत आह । **सृजेः क्विनो विधानादिति** ॥ ऋत्विगादिसूत्रेण इति शेष । तथाच क्विन् प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणादिहापि कुत्व निर्बाधमिति भाव । **भाष्यप्रयोगादिति** ॥ नच 'रज्जुसृड्भ्याम्' इति भाष्यप्रयोगात् विश्वसृडादौ कथ कुत्वाभाव इति वाच्यम् । ज्ञापकस्य सामान्यापेक्षत्वात् । नचैव सति असृज्शब्देऽपि कुत्व न स्यादिति वाच्यम् । अनव्ययपूर्वपदस्य सृजेरेव भाष्यप्रयोगत कुत्वाभावबोधनादिति भाव । ननु उदाहृतभाष्यप्रयोगात् विश्वसृड्रज्जुसृडादौ षत्वसिद्धावपि देवान् यजतीति देवेट् इत्यादौ 'चो कु' इति कुत्वस्यासिद्धत्वात् व्रश्चादिना षत्वे, तस्य 'क्विन्प्रत्ययस्य कु' इति कुत्व दुर्वारमित्यस्वरसादाह । **यद्वेति** ॥ **षत्वं कुत्वापवादः इति** ॥ यद्यपि सृष्टमित्यादौ अपदान्ते षत्व सावकाशम् । तथापि यजिसृज्यो पूर्वोत्तरसाहचर्येण पदान्तेऽपि विशिष्यविहितत्वान्निरवकाशत्वाच्च पदान्तविषये षत्व कुत्वापवाद । तथाच विश्वसृडादौ देवेडादौ च षत्वन्निर्बाधम् । अत एव 'सृजिदृशो' इति सूत्रे रज्जुसृड्भ्यामिति काम्यच्चिविसूत्रे उपयट्काम्यतीति च भाष्यप्रयोगस्सङ्गच्छत इति भाव । नन्वेव सति स्रगृत्विक्छब्दयोरपि 'क्विन्प्रत्ययस्य' इति कुत्व बाधित्वा व्रश्चादिना षत्व स्यादित्यत आह । **स्रगृत्विक्छब्दयोरिति** ॥ ऋत्विगादिसूत्रे ऋत्विक् स्रक् इति निपातनादेव कुत्वमित्यर्थ । नच स्रष्टा यष्टा इत्यादौ अपदान्ते निपातनात् कुत्वापत्तिरिति वाच्यम् । निपातनेन ह्यनयो अपवादभूतषत्वस्य अप्रवृत्तिमात्र बोध्यते । कुत्वन्तु स्वशास्त्रेणैव यथायथ भवतीति न दोष । ननु तर्ह्यसृक्छब्देऽपि कुत्वापवादष्षत्व स्यात् । ऋत्विगादिसूत्रे स्रक्छब्दस्यैव कुत्वनिपातनात् इत्यत आह । **असृक्छब्दस्त्विति** ॥ 'असु क्षेपणे' इत्यस्मात् औणादिके ऋजिप्रत्यये सति निष्पन्नस्य असृक्छब्दस्य 'व्रश्च' इति षत्वाविषयत्वात् 'चो कु' इति कुत्वे

* अनव्ययपूर्वपदे कुत्वाभाव अव्ययपूर्वपदे कुत्वम् ।

णादिके ऋज्प्रत्यये बाध्ये । असृक्–असृग्, असृजी, असृञ्जि । 'पद्दन—' (सू २२८) इति वा । असन्, असानि । असृजा–अस्ना, असृग्भ्याम्–असभ्यामित्यादि । ऊर्क्–ऊर्ग्, ऊर्जी, ऊर्न्जि । नरजाना सयोग. । 'बहूर्जि नुम्प्रतिषेध' (वा ४३३१) । 'अन्त्यात्पूर्वो वा नुम्' (वा ४३३२) । बहूर्जि–बहूर्ञ्जि वा कुलानि ।

इति जान्ता ।

## ॥ अथ हलन्तनपुंसकलिङ्गे दकारान्तप्रकरणम् ॥

---

त्यत्–त्यद्, त्ये, त्यानि । तत्–तद्, ते, तानि । यत्–यद्, ये, यानि । एतत्–एतद्, एते, एतानि । अन्वादेशे तु एनत् । बेभिद्यते क्विप् । बेभित्–

सति असृक्छब्दो बोध्य इत्यर्थ । **असृञ्जीति** ॥ जश्शसो शि, झलन्तत्वान्नुम्, 'नश्च' इत्यनुस्वार, तस्य परसवर्णो ञकार इति भाव । **असानीति** ॥ शसरिश, नान्तत्वाद्दीर्घ इति भाव । **अस्नेति** ॥ तृतीयैकवचने असन्नादेशे अल्लोप । **असृग्भ्यामिति** ॥ असन्नादेशाभावे कुत्वे जश्त्वमिति भाव । **असभ्यामिति** ॥ भ्यामादौ असन्नादेशे नलोप इति भाव । **ऊर्गिति** ॥ 'ऊर्ज बलप्राणनयो' क्विप्, स्वमोर्लुक्, कुत्वेन ग, तस्य चर्त्वविकल्प इति भाव । **ऊर्न्जीति** ॥ जश्शसो शि, झलन्तत्वान्नुम्, स च मित्वादन्त्यादच ऊकारात् परो भवति । तदाह । **नरजानां संयोगः इति** ॥ बहूर्क्छब्दोऽपि प्रायेण ऊर्ग्वदेव । जश्शसो शिभावे कृते, झलन्तलक्षणनुमि ऊकारादुपरि प्राप्ते, 'बहूर्जि प्रतिषेधो वक्तव्य' 'अन्त्यात् पूर्व नुममेक इच्छन्ति' इति च वार्तिक प्रवृत्तम् । तदेतदर्थतस्सङ्गृह्णाति । **बहूर्जीति** ॥ बहूर्ज्शब्दे अन्त्यादच ऊकारात् उपरि नुम प्रतिषेधो वक्तव्य, किन्तु अन्त्याद्वर्णात् पूर्वो नुम् वा स्यादित्यर्थ । **बहूर्जीति** ॥ जश्शसोर्नुमभावे रूपम् । **बहूर्ञ्जीति** ॥ जकारात् पूर्व रेफादुपरि नुमि कृते, श्चुत्वस्यासिद्धत्वात् 'नश्च' इति तस्यानुस्वारे, तस्य परसवर्णे, ञकारे रूप बोध्यम् । अत्र बहूर्जिप्रतिषेध इति प्रथमवार्तिक न कर्तव्यम् । 'नपुसकस्य झलच' इति सूत्रस्य अच परो यो झल् तदन्तस्य क्लीबस्य नुम् स्यादिति व्याख्याने सति नुम एवाप्रसक्ते । न चैव सति वनानीत्यादावव्याप्तिरिशङ्कया । 'इकोऽचि विभक्तौ' इत्यत अचीत्यनुवर्त्य अजन्तस्य क्लीबस्य सर्वनामस्थाने परे नुम् स्यादिति वाक्यान्तराश्रयणादिति भाष्ये स्थितम् । एवञ्च ऊर्क्छब्दे शौ 'नरजाना सयोग' इति मूल भाष्यविरुद्धत्वादुपेक्ष्यमेव । तत्र अच परस्य झल अभावेन नुम अप्रसक्ते ॥　　　　इति जान्ता ।

---

अथ दकारान्ता निरूप्यन्ते । **त्यदिति** ॥ त्यद्, तद्, यद्, एतद् एषा स्वमोर्लुका लुप्तत्वात् त्यदाद्यत्व, पररूप, 'तदो स सौ' इति सत्वञ्च, न भवति । इतरत्र तु सर्वत्र त्यदाद्यत्वे पररूपे च अदन्तवद्रूपाणि, सर्वनामकार्यञ्च, इति बोध्यम् । **अन्वादेशे त्वेनदिति** ॥

बेभिद्, बेभिदी। शावल्लोपस्य स्थानिवत्त्वादझलन्तत्वान्न नुम्। अजन्तलक्षणस्तु नुम् न। स्वविधौ स्थानिवत्त्वाभावात्। बेभिदि ब्राह्मणकुलानि। चेच्छिदि।

इति दान्ता।

---

## ॥ अथ हलन्तनपुंसकलिङ्गे चकारान्तप्रकरणम् ॥

---

"गवाक्छब्दस्य रूपाणि क्लीबेऽर्चागतिभेदत।
असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतम्मतम्॥

---

अन्वादेशे नपुसकैकवचने एनद्विधानादिति भाव। औङि जश्शसोश्च एने, एनानि। **बेभिद्यतेरिति**॥ श्तिपा निर्देशोऽयम्। बेभिद्य इति यङन्ताद्धातोरित्यर्थ। 'भिदिर् विदारणे'। अस्मात् यङि 'सन्यङो' इति द्वित्वे, हलादिशेषे, 'अभ्यासे चर्च' इत्यभ्यास-भकारस्य जश्त्वेन बकारे, 'गुणो यङ्लुको' इति गुणे, बेभिद्य इति रूपम्। तस्मात् 'सना-द्यन्ता' इति धातुत्वात् क्विप्, अतो लोप, 'यस्य हल' इति यलोप। बेभिद्शब्दात् स्वमोर्लुक्, जश्त्वचर्त्वे बेभिद्-बेभित् इति रूपमिति भाव। **बेभिदी इति**॥ औङ श्या रूपम्। जश्शसोश्शौ झलन्तलक्षणनुममाशङ्क्य आह। **शाविति॥ स्थानि-वत्त्वादिति**॥ 'अच परस्मिन्' इत्यनेनेति शेष। न चात्र अल्लोपस्थानिभूतादच पूर्व दकार एव, न त्विकार, तस्य दकारेण व्यवधानात्। तथाच तस्य नुम्विधि स्थानिभूता-दच पूर्वस्य विधिर्नेति वाच्यम्। 'अच परस्मिन्' इत्यत्र व्यवहितपूर्वस्यापि ग्रहणस्योक्त-त्वात्। 'क्वौ लुप्त न स्थानिवत्' इति तु न सार्वत्रिकमिति 'दीधीवेवीटाम्' इत्यत्र कैयटे स्पष्टम्। नन्वल्लोपस्य स्थानिवत्त्वात् झलन्तलक्षणनुमोऽभावेऽपि अजन्तलक्षणो नुम् दुर्वार इत्यत आह। **अजन्तलक्षणस्तु नुम् नेति**॥ कुत इत्यत आह। **स्वविधौ स्थानि वत्त्वाभावादिति**॥ अल्लोपस्य स्थानिवत्त्वमाश्रित्य मित्वादन्त्यादच पर प्रवर्तमानो हि नुम् दकारोपरितनस्य अकारोपलक्षितदेशस्योपरि प्रवृत्तिमर्हति। तथाच लोपस्थानिभूतस्य स्वस्यैवात्र नुम्विधि। तस्मिन् कर्तव्ये अल्लोपस्य स्थानिवत्त्व न सम्भवति। स्थान्यपेक्षया पूर्वस्यैव विधौ 'अच परस्मिन्' इत्यस्य प्रवृत्ते। स्थानिवत्सूत्रमपि स्थानिभूतस्य स्वस्य कार्यविधौ न प्रवर्तते। अनल्विधाविति निषेधादित्यर्थ। 'अच परस्मिन्' इति सूत्रे 'पूर्वविधावित्यपनीय अपरविधाविति वक्तव्य, स्वविधौ स्थानिवत्त्वार्थम्' इति वार्तिकन्तु भाष्ये प्रत्याख्यातमित्यदोष॥

इति दकारान्ता।

---

अथ चकारान्ता निरूप्यन्ते॥ "जायन्ते नव सौ तथामि च नव भ्याभिस्-भ्यसा सङ्गमे षट्सङ्ख्यानि नवैव सुप्यथ जासि त्रीण्येव तद्वच्छसि। चत्वार्यन्यवचस्सु कस्य विबुधाश्शब्दस्य रूपाणि तज्जानन्तु प्रतिभास्ति चेन्निगदितु षाण्मासिकोऽत्रावधि॥" इति प्राची-नस्य कस्यचित् प्रश्नस्य श्लोकद्वयेन तदुत्तरमाह। **गवाक्छब्दस्येति**॥ **अर्चागतिभेदतः**

स्वम्सुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसो.।
चत्वारि शेषे दशके रूपाणीति विभावय॥"

तथाहि। गामञ्चतीति विग्रहे 'ऋत्विग्—' (सू ३७३) आदिना क्विन्। गतौ नलोप। 'अवङ् स्फोटायनस्य' (सू ८८) इत्यवङ्। गवाक्--गवाग। 'सर्वत्र विभाषा—' (सू ८७) इति प्रकृतिभावे, गोअक्--गोअग्। पूर्वरूपे, गोऽक्—गोऽग्। पूजाया, नस्य कुत्वेन ङ। गवाङ्—गोअङ्—गोऽङ्। अम्यप्येतान्येव नव। औङ शी, भत्वात् 'अच' (सू ४१६) इत्यल्लोप। गोची।

---

**इति**॥ 'अनिदिताम्' इत्यञ्चेर्गतौ नकारस्य लोप। पूजायान्तु 'नाञ्चे पूजायाम्' इति निषेधान्नस्य लोपो नेत्येव गतिपूजात्मकार्थभेदनिबन्धननलोपतदभावाभ्यामिति यावत्। **असन्ध्यीति**॥ प्रकृतिभावो विवक्षित। असन्ध्यवङ्पूर्वरूपैरित्यनन्तर चशब्दोऽध्याहर्तव्य। शतमित्यनन्तरमितिशब्दश्च। तथाच गत्यर्थपूजार्थभेदनिबन्धननलोपतदभावाभ्याम् असन्ध्यवङ्पूर्वरूपैश्च गवाक्छब्दस्य रूपाणि नवाधिकशतमिति मत सम्मतमित्यर्थ। एतेन 'विंशत्याद्यास्सदैकत्वे सङ्ख्या सङ्ख्येयसङ्ख्ययो' इति कोशात् शतशब्दस्य सङ्ख्यापरत्वे गवाक्छब्दस्य रूपाणामिति भाव्यम्। सङ्ख्येयपरत्वे तु मतमित्येकवचनानुपपत्तिरिति निरस्तम्। सङ्ख्येयपरत्वमाश्रित्य इतिशब्दमध्याहृत्य नवाधिकशत रूपाणीत्यर्थाश्रयणात्। यद्वा शतशब्दस्य सङ्ख्येयपरत्वेऽपि शतमित्येकत्वाभिप्रायम्मतमित्येकवचनमित्यदोष। नवाधिकशतमित्येतत् प्रपञ्चयति। **स्वम्सुप्सु नवेति**॥ प्रत्येकमिति शेष। रूपाणीति सर्वत्रान्वेति। **षड् भादौ षट्के स्युरिति**॥ भिसि, भ्यान्त्रये, भ्यसद्वये, च प्रत्येक षडित्यर्थ। **त्रीणि जश्शसोरिति**॥ प्रत्येकमिति शेष। **चत्वारि शेषे दशके इति**॥ प्रत्येकमिति शेष। स्वम्सुप्सु नवेत्येतदुपपादयति। **तथा हीति**॥ **गामञ्चतीति**॥ गा गच्छति पूजयति वेत्यर्थ। क्विनि उपपदसमासे सुब्लुकि गा अञ्च् इति स्थिते प्रक्रिया दर्शयति। **गतौ नलोपः इति**॥ गत्यर्थकत्वे 'अनिदिताम्' इति नस्य लोप इत्यर्थ। **गवाक्-गवागिति**॥ गो अच् स् गो अच् अम् इति स्थिते, स्वमोर्लुकि, अक्लीबस्येति पर्युदासात् सर्वनामस्थानत्वाभावेन 'उगिदचाम्' इति नुमभावे, ओकारस्य अवङादेशे, सवर्णदीर्घ, जश्त्वचर्त्वे इति भाव। **सर्वत्रेति**॥ अवङादेशस्य वैकल्पिकत्वात्तदभावपक्षे 'सर्वत्र विभाषा' इति प्रकृतिभावात् 'एङ पदान्तादति' इति पूर्वरूपस्याप्यभावे सतीत्यर्थ। **पूर्वरूपे इति**॥ अवङ प्रकृतिभावस्य चाभावे 'एङ पदान्तात्' इति पूर्वरूपे सतीत्यर्थ। तदेव गत्यर्थकत्वे षड्रूपाणि। **पूजायामिति**॥ 'नाञ्चे पूजायाम्' इति नलोपाभावात् गो अञ्च् इत्यस्मात् स्वमोर्लुकि, चकारस्य सयोगान्तलोपे, नकारस्य 'क्विन्प्रत्ययस्य कु' इति कुत्वेन ङकार। तत अवङि, प्रकृतिभावे, पूर्वरूपे च, त्रीणि रूपाणीति भाव। पूर्वोदाहृतषड्रूपसङ्कलनया सौ नव रूपाणि। **औङः शीति**॥ गत्यर्थकत्वे नलोपे औङश्शीभावे च सति अक्लीबस्येति पर्युदासादसर्वनामस्थानतया भत्वात् 'अच' इत्यल्लोपे गोची इत्येकमेव रूपम्। अकारस्य लुप्तत्वेन अवङाद्यसम्भवात्। **पूजायां त्विति**॥ अलुप्तनकारत्वात् 'अच.' इत्यल्लोपो नेति भाव.।

पूजायान्तु, गवाञ्ची--गोअञ्ची--गोऽञ्ची। 'जश्शसो. शि' (सू ३१२) शेस्सर्वनामस्थानत्वान्नुम्, गवाञ्चि--गोअञ्चि--गोऽञ्चि। गतिपूजनयोस्त्रीण्येव। गोचा--गवाञ्चा--गोअञ्चा--गोऽञ्चा। गवाग्भ्याम्--गोअग्भ्याम्--गोऽग्भ्याम्--गवाङ्भ्याम्--गोअङ्भ्याम्--गोऽङ्भ्याम् इत्यादि। सुपि तु ङान्तानां, पक्षे 'ङ्णो. कुक्--' (सू १३०) इति कुक्। गवाङ्क्षु--गोअङ्क्षु--गोऽङ्क्षु--गवाङ्षु*--गोअङ्षु*--गोऽङ्षु*--गवाक्षु--गोअक्षु--गोऽक्षु। न चेह 'चयो द्वितीया' (वा ५०२३) इति पक्षे ककारस्य खकारेण षण्णामाधिक्यं शङ्क्यम्। चर्त्वस्यासिद्धत्वात्। कुक्पक्षे तु तस्यासिद्धत्वाज्जश्त्वाभाव.। पक्षे चयो द्वितीयादेशात्त्रीणि रूपाणि वर्धन्त एव।

---

तथाच औडि त्रीणि रूपाणि। पूर्वोदाहृतैकरूपसङ्कलनया प्रत्येक चत्वारि रूपाणि। **शेस्सर्वनामेति** ॥ गत्यर्थकत्वे नलोपे सति, शौ 'उगिदचाम्' इति नुमि, तस्य 'नश्च' इत्यनुस्वार, परसवर्ण इति भाव। पूजार्थकत्व तु अलुप्तनकारत्वान्नुम् न। किन्तु स्वाभाविकनकारस्य अनुस्वार परसवर्ण इति भाव। गतिपूजनयो शौ अविकृतान्येव त्रीणि रूपाणीत्याह। **गतिपूजनयोस्त्रीण्येवेति** ॥ **गोचेति** ॥ गत्यर्थकत्वे लुप्तनकारत्वात् 'अच' इत्यल्लोपे एकमेव रूपमिति भाव। पूजार्थत्वे तु अलुप्तनकारत्वात् 'अच' इत्यल्लोपाभावे, अवङि, प्रकृतिभावे, पूर्वरूपे च, त्रीणि रूपाणीत्याह। **गवाञ्चा-गोअञ्चा-गोऽञ्चेति** ॥ भ्यामि गत्यर्थकत्वे नलोपे सति चस्य जश्त्वे कुत्वे अवङसन्धिपूर्वरूपै त्रीणि रूपाणि। पूजार्थत्वे तु नलोपाभावात् चकारस्य सयोगान्तलोपे नकारस्य 'क्विन्प्रत्ययस्य' इति कुत्वेन ङकारे अवङसन्धिपूर्वरूपै त्रीणि रूपाणीत्यभिप्रेत्य आह। **गवाग्भ्यामित्यादिना** ॥ **इत्यादीति** ॥ गवाग्भि--गोअग्भि--गोऽग्भि--गवाङ्भि--गोअङ्भि--गोऽङ्भि। गोचे--गवाञ्चे--गोअञ्चे--गोऽञ्चे। भ्यामि, भ्यसि च, प्राग्वत् षड्रूपाणि। ङसौ, गोच--गवाञ्च--गोअञ्च--गोऽञ्च। भ्यामि, भ्यसि च, प्राग्वत्। गोच--गवाञ्च--गोअञ्च गोऽञ्च। ङसि, गोचो--गवाञ्चो--गोअञ्चो--गोऽञ्चो। गोचाम्-गवाञ्चाम्--गोअञ्चाम्--गोऽञ्चाम्। गोचि--गवाञ्चि--गोअञ्चि--गोऽञ्चि। ओसि प्राग्वत्। **सुपि त्विति** ॥ पूजार्थकत्वे नलोपनिषेधात् चकारस्य सयोगान्तलोपे नकारस्य 'क्विन्प्रत्ययस्य' इति कुत्वेन ङकार। ततश्च अवङसन्धिपूर्वरूपै त्रयाणा रूपाणा ङकारान्ताना कुगागम इत्यर्थ। कुगभावे तु गवाङ्षु--गोअङ्षु--गोऽङ्ष्विति त्रीणि रूपाणि सुगमत्वान्नोक्तानि। गतौ तु नलोपे सति चस्य कुत्वेन ककारे अवङसन्धिपूर्वरूपै त्रीणि रूपाणि दर्शयति। **गवाक्षु--गोअक्षु--गोऽक्ष्विति** ॥ तथाच सुपि नव रूपाणि। नन्वेषाम्मध्ये ककारवत्सु षड्रूपेषु 'चयो द्वितीया' इति ककारस्य खकारपक्षे षड्रूपाणि सखकाराण्यधिकानि स्युरित्याशङ्क्य निराकरोति। **नचेहेति** ॥ **चर्त्वस्येति** ॥ गतौ नलोपे सति, चकारस्य कुत्वे, तस्य जश्त्वेन गकारे, तस्य

---

* यद्यप्येतेषा त्रयाणा शब्दस्वरूपाणाम्मूले निवेशन व्याख्यातुरनभिमतमिति प्रतीयते, तद्वचनभङ्ग्या। तथापि पठनपाठनपथवर्तिषु बहुषु पुस्तकेषूपलम्भात् अत्रापि मूले तदादरणमिति मन्तव्य वाचकमहाशयै।

"ऊह्यमेषां द्विर्वचनानुनासिकविकल्पनात् ।
रूपाण्यश्वाक्षिभूतानि (५२७) भवन्तीति मनीषिभिः ॥"

---

'खरि च' इति चर्त्वेन ककारे, गवाक्षु–गोअक्षु–गोऽक्ष्विति त्रीणि रूपाणीति स्थिति । तत्र 'चयो द्वितीया ' इति शास्त्रदृष्ट्या चर्त्वशास्त्रस्यासिद्धत्वात् ककारो नास्त्येव । किन्तु गकार एवास्ति, तस्य चर्त्वाभावात् 'चयो द्वितीया ' इति न भवतीत्यर्थ । तथाच गतौ त्रयाणामाधिक्यन्निरस्तम् । पूजायान्तु कुक्पक्षे गवाङ्क्षु–गोअङ्क्षु–गोऽङ्क्षु इति त्रिषु ककारस्य द्वितीये सति खकारवता त्रयाणामाधिक्यमिष्टमेवेत्याह । **कुक्पक्षे त्विति** ॥ नचैव सति नवाधिकशतमिति विरोधश्शङ्क्य । नवाधिकशतमिति सूत्रकारस्य मतमित्यर्थात् । **ऊह्यमेषामिति** ॥ प्रदर्शिताना द्वादशाधिकशतरूपाणामित्यर्थ । **अश्वाक्षिभूतानीति** ॥ सप्तविंशत्यधिकपञ्चशतानीत्यर्थ । अश्वशब्दो हि सप्तत्वसङ्ख्यावच्छिन्नलक्षक ।'सप्ताश्वा हरितस्सूर्यस्य' इति दर्शनात् । अक्षिशब्दस्तु द्वित्वसङ्ख्यावच्छिन्नलक्षक । मनुष्यादिषु प्रायेणाक्ष्णो द्वित्वात् । भूतशब्दस्तु पञ्चत्वसङ्ख्यावच्छिन्नलक्षक । पृथिव्यप्तेजोवाय्वाकाशाना भूतशब्दवाच्याना पञ्चत्वात् । तत्राश्वशब्देन प्रथमनिर्दिष्टेन सप्तत्वसङ्ख्यैव विवक्षिता । अक्षिशब्देन तु द्वितीयनिर्दिष्टेन सूचितया द्वित्वसङ्ख्यया दशकद्वयात्मिका विंशतिसङ्ख्या विवक्षिता । भूतशब्देन तु तृतीयनिर्दिष्टेन सूचितया पञ्चत्वसङ्ख्यया पञ्चशत लक्ष्यते । उक्तञ्च ज्यौतिषेण "एकदशशतसहस्रायुतलक्षप्रयुतकोटय क्रमश । अर्बुदमब्ज खर्वनिखर्वमहापद्मशङ्कवस्तस्मात् ॥ जलधिश्चान्त्य मध्य परार्धमिति दशगुणोत्तरास्सञ्ज्ञा ।" इति । अत्र अश्वशब्दसूचिता सप्तत्वसङ्ख्यामादौ लिखित्वा तदुत्तरत अक्षिशब्दसूचिता द्वित्वसङ्ख्या लेख्या । तदुत्तरतस्तु भूतशब्दसूचिता पञ्चत्वसङ्ख्या लेख्या । अङ्काना वामतो गतिरिति वचनात् इत्यादिगणकसम्प्रदायप्रवर्तकलीलावत्यादिग्रन्थतो ज्ञेयम् । तथाच सप्त च विंशतिश्च पञ्चशतानि च रूपाणि भवन्तीति मनीषिभिरूह्यमित्यर्थ । तथाहि, सौ नवाना रूपाणामन्त्यवर्णस्य 'अनचि च' इति द्वित्वे तदभावे च अष्टादश रूपाणि । प्रथमाद्विवचने चतुर्णाम्मध्ये पूजार्थाना त्रयाणा ञकारस्य 'अनचि च' इति द्वित्वे तदभावे च षड्रूपाणि, 'अणोऽप्रगृह्यस्य' इति तु न, प्रगृह्यत्वात् । गतौ त्वेकमेव, सङ्कलनया सप्त । जसि तु त्रयाणा ञकारस्य द्वित्वे तदभावे च षड्रूपाणि । षण्णामेषामन्त्यस्य इकारस्य 'अणोऽप्रगृह्यस्य' इत्यनुनासिकपक्षे षट्, अनुनासिकत्वाभावपक्षे तु षट् स्थितान्येव, सङ्कलनया जसि द्वादश । तथाच प्रथमाया विभक्तौ सप्तत्रिंशत् । एव द्वितीयाया विभक्तावपि सप्तत्रिंशत् । तृतीयैकवचने तु चतुर्णा मध्ये पूजार्थाना त्रयाणा ञकारद्वित्वे तदभावे च षड्रूपाणि, गतौ त्वेकमेव । सङ्कलनया सप्त । एषा सप्तानामन्त्यस्य आकारस्य अनुनासिकत्वपक्षे सप्त, तदभावे तु सप्त स्थितान्येव, सङ्कलनया चतुर्दश । भ्यामि तु षण्णा मध्ये गतौ गकारस्य, पूजाया डकारस्य च द्वित्वे षट्, तदभावे षट् स्थितान्येव, सङ्कलनया द्वादश । एषु यकारस्य 'यणो मय ' इति द्वित्वे द्वादश । मय इति पञ्चमी यण इति षष्ठीत्याश्रयणात् । यकारद्वित्वाभावे तु द्वादश स्थितान्येव, सङ्कलनया चतुर्विंशति, एषु मकारस्य द्वित्वे चतुर्विंशति, तदभावे चतुर्विंशति स्थितान्येव, सङ्कलनया भ्यामि अष्टाचत्वारिंशत् । भिसि तु षण्णाम्मध्ये गतौ

गकारस्य पूजाया ङकारस्य च द्वित्वे षट्, तदभावे षट् स्थितान्येव, सङ्कलनया द्वादश। एषु विसर्गस्य द्वित्वे द्वादश। अयोगवाहानाम् अट्सु शर्षु चोपसख्यातत्वेन विसर्गस्य यत्वात्। तस्य तु द्वित्वाभावे द्वादश स्थितान्येव, सङ्कलनया भिसि चतुर्विंशति। तथाच तृतीयाविभक्तौ षडशीति। चतुर्थ्येकवचने चतुर्णाम्मध्ये पूजार्थाना त्रयाणा ञकारद्वित्वे तदभावे च षट्, गतौ त्वेकमेव, सङ्कलनया ङयि सप्त, एकारस्य अनण्त्वान्नानुनासिक। भ्यामि तु प्राग्वदेव अष्टाचत्वारिंशत् भ्यसि तु षण्णाम्मध्ये गतिपूजनयो प्रत्येक त्रयाणा गङयोर्द्वित्वे षट्, तदभावे तु षट् स्थितान्येव, सङ्कलनया द्वादश। एषु यकारस्य 'यणो मय' इति द्वित्वे द्वादश, तदभावे तु द्वादश स्थितान्येव, सङ्कलनया चतुर्विंशति। एषु विसर्गस्य द्वित्वे चतुर्विंशति, तदभावे तु चतुर्विंशति स्थितान्येव, सङ्कलनया भ्यसि अष्टाचत्वारिंशत्। तथा च चतुर्थ्यां विभक्तौ त्र्यधिकं शतम्। ङसौ तु पूजाया त्रयाणा रूपाणा ञकारद्वित्वे तदभावे च षट्, गतौ त्वेक स्थितमेव, सङ्कलनया सप्त। एषु विसर्गद्वित्वे सप्त, तदभावे तु सप्त स्थितान्येव, सङ्कलनया ङसौ चतुर्दश। भ्यामि भ्यसि च प्राग्वत् प्रत्येक अष्टचत्वारिंशत्। तथाच पञ्चम्या विभक्तौ दशाधिक शतम्। ङसि तु ङसिवच्चतुर्दश। ओसि तु चतुर्णाम्मध्ये पूजाया त्रयाणा ञकारस्य द्वित्वे तदभावे च षट्, गतौ त्वेक, सङ्कलनया सप्त। एषु विसर्गस्य द्वित्वे तदभावे च चतुर्दश। आमि तु चतुर्णाम्मध्ये पूजाया त्रयाणा त्रिषु ञकारस्य द्वित्वे षट्, गतौ त्वेक, सङ्कलनया सप्त। एषु मकारस्य द्वित्वे तदभावे च चतुर्दश, तथाच षष्ठ्या द्विचत्वारिंशत्। ङौ पूजाया त्रयाणा ञकारस्य द्वित्वे तदभावे षट्, गतावेक, सङ्कलनया सप्त, एषु अन्त्यस्य इकारस्य अनुनासिकत्वे तदभावे च चतुर्दश। ओसि प्राग्वच्चतुर्दश। सुपि तु द्वादशानाम्मध्ये पूजाया कुगभावपक्षे ङकारस्य द्वित्वे त्रीणि, तदभावे तु त्रीणि स्थितान्येव, सङ्कलनया षट्। कुक्पक्षे तु 'चयो द्वितीया' इति द्वितीयादेशे खकारवन्ति त्रीणि, तदभावे तु ककारवन्ति त्रीणि, सङ्कलनया षट्, षण्णामेषा ङकारद्वित्वे षट्, तदभावे तु षट् स्थितान्येव, सङ्कलनया द्वादश। एषा द्वादशाना 'खयश्शर' इति षकारद्वित्वे द्वादश, तदभावे तु द्वादश स्थितान्येव, सङ्कलनया चतुर्विंशति। 'शरोऽचि' इति निषेधस्तु न, तस्य सौत्रद्वित्वमात्रविषयत्वात्। तथा च कुक्पक्षे चतुर्विंशति, कुगभावे तु षट् स्थितान्येव, सङ्कलनया पूजाया त्रिंशत्। गतौ तु त्रयाणा ककारस्य द्वित्वे त्रीणि, तदभावे तु त्रीणि स्थितान्येव, षण्णामेषा 'खयश्शर' इति षकारद्वित्वे षट्, तदभावे तु षट् स्थितान्येव, सङ्कलनया द्वादश। तथाच सङ्कलनया गतौ पूजायाञ्च द्विचत्वारिंशत्। एषामन्त्यस्यानुनासिकत्वे तदभावे च सुपि चतुरशीति। एवञ्च सु अष्टादश (१८), औ सप्त (७), जस् द्वादश (१२), आहत्य प्रथमाया सप्तत्रिंशत् (३७), अम् अष्टादश (१८), औट् सप्त (७), शस् द्वादश (१२), आहत्य द्वितीयाया सप्तत्रिंशत् (३७), टा चतुर्दश (१४), भ्याम् अष्टाचत्वारिंशत् (४८), भिस् चतुर्विंशति (२४), आहत्य तृतीयाया षडशीति (८६)। ङे सप्त (७), भ्याम् अष्टाचत्वारिंशत् (४८), भ्यस् अष्टाचत्वारिंशत् (४८), आहत्य चतुर्थ्यां त्र्यधिक शत (१०३), ङसि चतुर्दश (१४), भ्याम् अष्टाचत्वारिंशत् (४८), भ्यस् अष्टाचत्वारिंशत् (४८), आहत्य पञ्चम्या दशाधिक शतम् (११०)। ङस् चतुर्दश (१४), ओस् चतुर्दश (१४), आम् चतुर्दश (१४) आहत्य षष्ठ्या

तिर्यक्, तिरश्ची, तिर्यञ्चि। पूजायां तु, तिर्यङ्, तिर्यञ्ची, तिर्यञ्चि।

इति चान्ता।

## ॥ अथ हलन्तनपुंसकलिङ्गे तकारान्तप्रकरणम् ॥

यकृत्, यकृती, यकृन्ति। 'पद्दन्—' (सू २२८) इति वा यकन्। यकानि। यक्ना--यकृता। शकृत्, शकृती, शकृन्ति। शकानि। शक्ना-शकृता। ददत्, ददती।

---

द्वाचत्वारिंशत् (४२)। ङि चतुर्दश (१४), ओस् चतुर्दश (१४), सुप् चतुरशीति (८४), आहत्य सप्तम्या द्वादशाधिकं शतम् (११२)। ततश्च सङ्कलनया पञ्चशतानि (५००) च विंशति (२०) च, सप्त (७) च रूपाणि। इति गवाक्छब्दप्रक्रिया। **तिर्यगिति** ॥ तिर. अञ्चति इति विग्रहे 'ऋत्विक्' आदिना क्विन्। गतौ 'अनिदिताम्' इति नलोप। तिरस् अच् इत्यस्मात् सुबुत्पत्ति, स्वमोर्लुक्, प्रत्ययलक्षणविरहात् असर्वनामस्थानत्वाच्च न नुम्। अभत्वात् 'अच' इत्यल्लोपो न, तिरसस्तिर्यादेश, यण्, 'क्विन्प्रत्ययस्य' इति कुत्वस्यासिद्धत्वात् चकारस्य 'चो कु' इति कुत्वम्, जश्त्वचर्त्वे इति भाव। **तिरश्ची इति** ॥ तिरस् अच् औ इति स्थिते औङश्श्या भत्वात् 'अच' इत्यल्लोप। 'अलोपे' इत्युक्तेर्न तिर्यादेश। सस्य श्चुत्वेन श इति भाव। **तिर्यञ्चीति** ॥ तिरस् अच् इत्यस्माज्जसि जश्शसो शि, सर्वनामस्थानत्वान्नुम्, अनुस्वारपरसवर्णौ, तिरसस्तिरि, यण्, अभत्वात्, 'अच' इत्यल्लोपो नेति भाव। **पूजायान्तु तिर्यङिति** ॥ स्वमोर्लुकि अभत्वात् अलुप्तनकारत्वात् 'अच' इत्यल्लोपाभावात्तिर्यादेश, चकारस्य सयोगान्तलोप, नस्य कुत्वेन ङकार इति भाव। **तिर्यञ्ची इति** ॥ औङ श्या रूपम्। अलुप्तनकारत्वादच इत्यल्लोपाभावात्तिरि। **तिर्यञ्चि इति** ॥ जश्शसो शि। शेष पुवत् ॥

इति चान्ता।

---

अथ तकारान्ता निरूप्यन्ते। **यकृदिति** ॥ मासपिण्डविशेषो यकृन्नाम याज्ञिकप्रसिद्ध। स्वमोर्लुक्, जश्त्वचर्त्वे, इति भाव। **यकृती इति** ॥ औङश्शी। **यकृन्तीति** ॥ जश्शसो शि, झलन्तत्वान्नुम्, अनुस्वारपरसवर्णाविति भाव। शसादौ विशेषमाह। **पद्दन्निति वा यकन्निति** ॥ **यकानीति** ॥ शसश्शि, यकन्नादेश, सर्वनामस्थानत्वात् नान्तलक्षण उपधादीर्घ इति भाव। **यक्नेति** ॥ टाया यकन्नादेशे अल्लोप। यक्ने। यक्न। यक्नो। यक्नि-यकनि। यकसु। यकन्नभावे यकृद्भ्यामित्यादि। **शकृदिति** ॥ शकृच्छब्द विष्ठावाची। यकृद्वत्। **ददत्, ददती इति** ॥ शतृप्रत्ययान्तोऽय ददच्छब्द पुल्लिङ्गनिरूपणे व्युत्पादित। तस्य स्वमोर्लुक्, औङश्शी, नुम् तु न, असर्वनामस्थानत्वात् 'नाभ्यस्ताच्छतु' इति निषेधाच्च।

## ४४४ । वा नपुंसकस्य । (७-१-७९)

अभ्यस्तात्परो य शता तदन्तस्य क्लीबस्य नुम् वा स्यात्सर्वनामस्थाने । ददन्ति--ददति । तुदत् ।

## ४४५ । आच्छीनद्योर्नुम् । (७-१-८०)

अवर्णान्तादङ्गात्परो य शतुरवयवस्तदन्तस्याङ्गस्य नुम् वा स्याच्छी-नद्यो परत । तुदन्ती--तुदती, तुदन्ति । भात्, भान्ती--भाती, भान्ति । पचत् ।

## ४४६ । शप्श्यनोर्नित्यम् । (७-१-८१)

---

शौ 'नाभ्यस्ताच्छतु' इति नित्य नुम्निषेधे प्राप्ते । **वा नपुंसकस्य** ॥ 'नाभ्यस्ता-च्छतु' इति सूत्र नञ्वर्जमनुवर्तते । नपुसकस्येति व्यत्ययेन पञ्चम्यर्थे षष्ठी । 'इदितो नुम् धातो' इत्यतो नुमिति 'उगिदचाम्' इत्यत सर्वनामस्थाने इति च अनुवर्तते । तदाह । **अभ्यस्तादित्यादिना** ॥ **ददन्तीति** ॥ नुमि अनुस्वारपरसवर्णौ । **तुददिति** ॥ 'तुद व्यथने' अस्माच्छतृप्रत्यये 'तुदादिभ्यश्श' इति श, शपोऽपवाद । 'अतो गुणे' इति शतुरकारेण पररूपे तुदच्छब्द, तस्मात् स्वमोर्लुक्, प्रत्ययलक्षणविरहात् असर्वनामस्थानत्वाच्च न नुम्, जश्त्वचर्त्वे इति भाव । तुदच्छब्दादौड श्याम्, असर्वनामस्थानत्वान्नुमि अप्राप्ते । **आच्छीनद्योर्नुम्** ॥ 'वा नपुसकस्य' इत्यत वेत्यनुवर्तते । आदिति पञ्चमी । अङ्गस्य इत्यधिकृत पञ्चम्या विप-रिणम्यते, तच्च आदित्यनेन विशेष्यते, तदन्तविधि, परस्य इत्यध्याह्रियते, शतुरित्यनन्तर-मवयवस्येत्यध्याह्रियते, तेन च अङ्गस्येति षष्ठ्यन्त विशेष्यते, तदन्तविधि, अङ्गस्येत्यस्य आवृत्ति बोध्या । तदाह । **अवर्णान्तादित्यादिना** ॥ 'इदितो नुम्' इत्यत अनुवृत्त्यैव सिद्धे नुम्ग्रहण स्पष्टार्थम् । **तुदन्ती-तुदती इति** ॥ औङश्श्या, नुमि, तदभावे च, रूपम् । शविकरणे कृते शतुरकारेण पररूपे एकादेशे सति तुद इत्यवर्णान्तमङ्गम्, तदादिग्रहणेन विकरणविशिष्टस्याप्यङ्गत्वात् । ततश्च तुदत् इत्यन्त्यस्तकार शतुरवयव तुद इत्यवर्णान्तादङ्गात् परश्चेति नुमिति भाव । अवर्णान्तादङ्गात् परो यश्शतृप्रत्यय इत्याश्रयणे तु अत्र नुम् न स्यात् । शविकरणाकारस्य शतुरकारस्य च एकादेशे कृते तस्य पूर्वान्तत्वे शतुरवर्णा-न्तादङ्गात् प्ररत्वाभावात्, परादित्वे अवर्णान्ताङ्गाभावात्, उभयत आश्रयेण च अन्तादिवत्त्व निषेधादित्यलम् । **तुदन्तीति** ॥ जश्शसोश्शि, सर्वनामस्थानत्वान्नुमिति भाव । **भादिति** ॥ 'भा दीप्तौ' लुग्विकरण लटश्शतरि कृते सवर्णदीर्घे भात् इति रूपम् । तस्मात् स्वमोर्लुक्, जश्त्वचर्त्वे इति भाव । **भान्ती-भाती इति** ॥ औङ शी' 'आच्छीनद्यो' इति नुम्विकल्प. इति भाव । **भान्तीति** ॥ जश्शसो शि, सर्वनामस्थानत्वान्नुमिति भाव । **पचदिति** ॥ पचधातो लटश्शतरि, शप्, 'अतो गुणे' इति पररूपम् । पचत् इत्यस्मात् स्वमोर्लुगिति भाव । औङ श्याम् 'आच्छीनद्यो' इति विकल्पे प्राप्ते । **शप्श्यनोर्नित्यम्** ॥ 'आच्छीनद्योर्नुम्'

शप्श्यनोरात्परो य. शतुरवयवस्तदन्तस्य नित्यं नुम् स्याच्छीनद्योः परतः । पचन्ती, पचन्ति । दीव्यत्, दीव्यन्ती, दीव्यन्ति ।

इति तान्ता ।

---

## ॥ अथ हलन्तनपुंसकलिङ्गे पकारान्तप्रकरणम् ॥

स्वप्--स्वब्, स्वपी । नित्यात्परादपि नुम प्राक् 'अप्तृन्—' (सू २७७) इति दीर्घः, प्रतिपदोक्तत्वात् नुम्, स्वाम्पि । 'निरवकाशत्व प्रतिपदोक्तत्वम्' इति पक्षे तु प्रकृते तद्विरहान्नुमेव । स्वम्पि। स्वपा । 'अपो भि' (सू ४४२) । स्वद्भ्याम् । स्वद्भिः ।

इति पान्ता ।

---

इत्यनुवर्तते, 'नाभ्यस्ताच्छतु' इत्यत शतुरित्यनुवर्तते । अवयव इति चाध्याह्रियते । तदाह । **शप्श्यनोरादित्यादिना ॥ पचन्ती इति ॥** औड श्या नुमि रूपम् । **पचन्तीति ॥** जश्शसोश्शौ सर्वनामस्थानत्वान्नुमि रूपम् । **दीव्यदिति ॥** दिवुधातो लटश्शतरि, श्यन्, 'हलि च', इति दीर्घ, दीव्यच्छब्दात् स्वमोर्लुगिति भाव । **दीव्यन्ती इति ॥** औड श्यान्नुमि रूपम् । 'शप्श्यनो' इति नित्य नुमिति भाव । **दीव्यन्तीति ॥** जश्शसो सर्वनामस्थानत्वात् नुमिति भाव ॥

इति तान्ता ।

---

अथ पकारान्ता निरूप्यन्ते ॥ **स्वबिति ॥** सु शोभना आपो यस्मिन् सरसीति बहुव्रीहि । 'ऋक्पूरब्धू' इति समासान्तस्तु न भवति । 'न पूजनात्' इति निषेधात् । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इति न भवति । तत्र अप इति कृतसमासान्तग्रहणात् । स्वप्शब्दात् स्वमोर्लुगिति भाव । **स्वपी इति ॥** औड श्या रूपम् । असर्वनामस्थानत्वात् न नुमिति भाव । जश्शसो शौ स्वप् इ इति स्थिते 'अप्तृन्' इति दीर्घे, झलन्तलक्षणनुमि, अनुस्वारे, परसवर्णे, स्वाम्पि इति वक्ष्यति । तत्र 'अप्तृन्' इति दीर्घ बाधित्वा परत्वान्नित्यत्वाच्च नुमि कृते अकारस्य उपधात्वाभावात् कथ दीर्घ इत्यत आह । **नित्यादित्यादि ॥ प्रतिपदोक्तत्वादिति ॥** 'अप्तृन्' इति दीर्घस्य अप्शब्दमुच्चार्य विहितत्वादित्यर्थ । ननु निरवकाशत्व प्रतिपदोक्तत्वमिति 'छदिरुपधिबलेर्ढञ्' इति सूत्रे 'शेषाद्विभाषा' इति सूत्रे च भाष्ये स्थितम् । 'अप्तृन्' इति दीर्घस्तु न निरवकाश, आप इत्यत्र सावकाशत्वात् । अतोऽत्र नित्यत्वात् परत्वाच्च पूर्वं नुमागमे कथ दीर्घ इत्याशङ्क्य इष्टापत्त्या परिहरति । **निरवकाशत्वमित्यादि ॥ स्वम्पीति ॥** दीर्घ बाधित्वा नुमि अनुस्वारपरसवर्णाविति भाव. । केचित्तु 'अप्तृन्' इति दीर्घस्य निरवकाशत्वरूपप्रतिपदोक्तत्वाभावेऽपि प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया प्रथम प्रवृत्तौ स्वाम्पि, इत्येव युक्तमित्याहु ॥

इति पान्ता ।

## ॥ अथ हलन्तनपुंसकलिङ्गे सकारान्तप्रकरणम् ॥

'अर्तिपृवपि—' (उ २७४) इत्यादिना धनेरुस् । षत्वस्यासिद्धत्वादुत्वम् । धनु , धनुषी । 'सान्त—' (सू ३१७) इति दीर्घ. । 'नुम्विसर्जनीय—' (सू ४३४) इति षत्वम् । धनूंषि । धनुषा, धनुर्भ्याम् । एवं चक्षुर्हविरादय. । पिपठिषते. क्विप् 'र्वो.—' (सू ४३३) इति दीर्घ. । पिपठी., पिपठिषी । अल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुम् न । स्वविधौ स्थानिवत्त्वाभावादजन्तलक्षणोऽपि नुम् न । पिपठिषि । पिपठीर्भ्यामित्यादि पुंवत् । पय , पयसी, पयांसि । पयसा, पयोभ्याम् इत्यादि । सुपुम्, सुपुंसी । सुपुमांसि । अदः । विभक्तिकार्यम्, उत्वमत्वे । अमू , अमूनि । शेषं पुंवत् ।

इति सान्ता ।

---

अथ सकारान्ता निरूप्यन्ते । धनुश्शब्द व्युत्पादयति । **धनेरिति** ॥ 'जनेरुसि ' इत्यत उसिरित्यनुवर्तमाने 'अर्तिपृवपियजितनिधनितपिभ्योऽनित्' इत्यौणादिकसूत्रेण 'धन धान्ये' इत्यस्माद्धातो उस्प्रत्यय इत्यर्थ । प्रत्ययावयवत्वात् सस्य षत्वे धनुष्शब्द , तस्मात् स्वमोर्लुक्, तत्र षकारस्य कथ रुत्वमित्यत आह । **षत्वस्येति** ॥ **धनुरिति** ॥ 'र्वोरुपधाया ' इति दीर्घस्तु न । रेफान्तस्य अधातुत्वात् । **धनूंषीति** ॥ 'नश्च' इत्यनुस्वार । **एवं चक्षुर्हविरादयः इति** ॥ 'चक्षेश्शिच्च' इत्युसि । शित्त्वेन सार्वधातुकत्वात् ख्शाञादेशो न । 'अर्चिशुचिहुसृपि ' इत्यादिना हुधातोरिस्, 'सार्वधातुकार्धधातुकयो ' इति गुण , अवादेश आदिना सर्पिरादयो ग्राह्या । **पिपठिषतेः क्विबिति** ॥ 'पठ व्यक्तायां वाचि ' सन् , इट्, द्वित्व, हलादिश्शेष , अभ्यासाकारस्य इत्त्व, प्रत्ययावयवत्वात् षत्व, 'सनाद्यन्ता ' इति धातुत्व, पिपठिष इत्यस्मात् क्विप्, अतो लोप , पिपठिष् इत्यस्मात् स्वमोर्लुक्, षत्वस्यासिद्धत्वाद्रुत्वम् । एतावत्सिद्धवत्कृत्य आह । **र्वोरिति दीर्घः इति** ॥ **पिपठिषी इति** ॥ औडश्श्या रूपम् । शौ विशेषमाह । **अल्लोपस्येति** ॥ बेभिद्शब्दनिरूपणे व्याख्यातमेतदनुपदमेव प्राक् । **पयः इति** ॥ 'पय क्षीर पयोऽम्बु च ' इत्यमर । **पयांसीति** ॥ शौ नुम् । 'सान्त' इति दीर्घ , अनुस्वार , इति भाव । **पयोभ्यामिति** ॥ रुत्वे, 'हशि च' इत्युत्वे, गुण इति भाव । **सुपुमिति** ॥ सु शोभन पुमान् यस्य गृहस्य इति बहुव्रीहौ, सुपुंस्शब्दात् स्वमोर्लुक्, सयोगान्तलोप । **सुपुंसी इति** ॥ औड श्या रूपम् । **सुमुमांसीति** ॥ शे सर्वनामस्थानत्वात् 'पुसोऽसुङ् ' इत्यसुङ् । सुपुस् इ इति स्थिते, झलन्तलक्षणनुमि, 'सान्तमहत ' इति दीर्घ , 'नश्च' इत्यनुस्वारश्चेति भाव । **अद॰ इति** ॥ अदस्शब्दात् स्वमोर्लुक्, रुत्वविसर्गौ, सान्तत्वात् न मुत्वम् , लुका लुप्तत्वात् त्यदाद्यत्वन्नेति भाव । आडादावाह । **विभक्तिकार्यमिति** ॥ त्यदाद्यत्वादिकमित्यर्थ । **उत्वमत्वे इति** ॥ 'पूर्वत्रासिद्धम् ' इति विभक्तिकार्योत्तर उत्वमत्वे इत्यर्थ । **अमू इति** ॥ औडश्शी, त्यदाद्यत्व, पररूप, गुण , ऊत्वमत्वे इति भाव । **अमूनीति** ॥ जश्शसोश्शि , त्यदाद्यत्व, पररूप, अजन्तत्वात् नुम् , उपधादीर्घ , ऊत्वमत्वे इति भाव ॥ इति सान्ता ।

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां हलन्तनपुसकलिङ्गप्रकरण समाप्तम् ।

श्रीरस्तु ।

# ॥ अथाऽव्ययप्रकरणम् ॥

## ४४७ । स्वरादिनिपातमव्ययम् । (१-१-३७)

**स्वरादयो निपाताश्चाव्ययसंज्ञा स्यु । स्वर् । अन्तर् । प्रातर् । पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । ऋते । युगपत् । आरात् । पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । समया । निकषा । स्वयम् । वृथा । नक्तम् । नञ् । हेतौ । इद्धा । अद्धा । सामि । 'वत्' (ग ४) । ब्राह्मणवत् । क्षत्रियवत् । सना । सनत् । सनात् । उपधा । तिरस् ।**

---

अथ अव्ययानि निरूप्यन्ते । **स्वरादिनिपातमव्ययम्** ॥ स्वर् आदि येषान्ते स्वरादय, ते च निपाताश्चेति समाहारद्वन्द्व । फलितमाह । **स्वरादयः इति** ॥ स्वरादीन् पठति । **स्वरित्यादिना** ॥ स्वरादीना चादीना पृथक् पाठस्तु 'निपाता आद्युदात्ता' इति स्वरभेदार्थं । चादीनामसत्त्ववाचिनामेवाऽव्ययत्वम् । स्वरादीनान्तु सत्त्ववाचिनामसत्त्ववाचिनाञ्च तदिति व्यवस्थार्थञ्च । **स्वर्** स्वर्गे पारत्रिकसुखविशेषे, परलोके च । **अन्तर्** मध्ये । **प्रातर्** प्रत्यूषे । **पुनर्** अप्रथमे विशेषे च । **सनुतर्** अन्तर्द्धाने । स्वराद्या पञ्च रेफान्ता । तेन स्वर्याति प्रातरत्रेत्यादौ 'हशि च' इत्युत्त्वन्न । तत्र 'रो' इत्युकारानुबन्धग्रहणात् । **उच्चैस्** महति । **नीचैस्** अल्पे । **शनैस्** क्रियामान्द्ये । **ऋधक्** सत्ये, वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये । **ऋते** वर्जने । **युगपत्** एककाले । **आरात्** दूरसमीपयो । **पृथक्** भिन्ने । **ह्यस्** अतीतेऽह्नि । **श्वस्** अनागतेऽह्नि । **दिवा** दिवसे । **रात्रौ** निशि । **सायम्** निशामुखे । **चिरम्** बहुकाले । **मनाक्, ईषत्** इद द्वयमल्पे । **जोषम्** सुखे, मौने च । **तूष्णीम्** मौने । **बहिस्, अवस्** इद द्वय बाह्ये । **समया** समीपे, मध्ये च । **निकषा** अन्तिके । **स्वयम्** आत्मनेत्यर्थे । **वृथा** व्यर्थे । **नक्तम्** रात्रौ । **नञ्** निषेधे । (श्लो) "तत्सादृश्यमभावश्च तदन्यत्व तदल्पता । अप्राशस्त्य विरोधश्च नञर्थाष्षट् प्रकीर्तिता ॥" इत्यन्ये । **हेतौ** निमित्ते । **इद्धा** प्राकाश्ये । **अद्धा** स्फुटावधारणयो, तत्त्वातिशययोरित्यन्ये । **सामि** अर्द्धे, जुगुप्सिते च । **वत्** इत्यनेन 'तेन तुल्य क्रिया चेद्वति' 'तत्र तस्येव' 'तदर्हम्' इति वतिप्रत्ययो गृह्यते । 'उपसर्गाच्छन्दसि धात्वर्थे' इति वतिस्तु न गृह्यते । 'परावतो निवत उद्वतश्च' इत्यत्राव्ययत्वाभावात् । वस्तुतस्तु 'तद्धितश्चासर्वविभक्ति' इत्येव सिद्धे वतिग्रहणमिह व्यर्थमेव । **ब्राह्मणवत्, क्षत्रियवत्** इति वतिप्रत्ययान्तस्योदाहरणम् । केवलप्रत्ययस्य अव्ययत्वे

**अन्तरा । अन्तरेण । ज्योक् । कम् । शम् । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । श्रौषट् । वौषट् । अन्यत् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रबाहुकम् । (प्रवाहिका) । आर्यहलम् । अभीक्ष्णम् । साकम् । सार्धम् । नमस् । हिरुक् । धिक् । अथ । अम् । आम् । प्रताम् । प्रशाम् । प्रतान् । मा । माङ् । आकृतिगणोऽयम् ।**

---

प्रयोजनाभावात्। **सना, सनत्, सनात्,** एतत्त्रय नित्ये। **उपधा** भेदे। **तिरस्** अन्तर्द्धौ, तिर्यगर्थे, पराभवे च। **अन्तरा** मध्ये, विनार्थे च। **अन्तरेण** वर्जने। वस्तुतस्तु 'अन्तराऽन्तरेण युक्ते' इति सूत्रे भाष्ये अन्तरा, अन्तरेण इत्यनयो निपातत्वोक्तेरनयो स्वरादिषु पाठ प्रक्षिप्त इति बोध्यम्। **ज्योक्** कालभूयस्त्वे, प्रश्ने, शीघ्रार्थे, सम्प्रति इत्यर्थे च। **कम्** वारिमूर्धनिन्दासुखेषु। **शम्** सुखे। **सहसा** आकस्मिकाविमर्शयो । **विना** वर्जने। **नाना** अनेकविनार्थयो । **स्वस्ति** मङ्गले। **स्वधा** पितृहविर्दाने। **अलम्** भूषणपर्याप्तिशक्तिवारणनिषेधेषु। **वषट्, वौषट्, श्रौषट्,** एतत्त्रय देवहविर्दाने। **अन्यत्** अन्यार्थे। **अस्ति** सत्तायाम्। उपसर्गविभक्ति स्वरप्रतिरूपकाश्च, इति चाद्यन्तर्गणसूत्रादेव अस्तिशब्दस्य विभक्तिप्रतिरूपकस्य अव्ययत्वसिद्धेरिह स्वरादिगणे तस्य पाठो व्यर्थ इति मतुप्सूत्रे भाष्यकैयटयो स्थितम्। **उपांशु** अप्रकाशोच्चारणे, रहस्ये च। **क्षमा** क्षान्तौ। **विहायसा** आकाशे। **दोषा** रात्रौ। **मृषा, मिथ्या** इद द्वय वितथे। **मुधा** व्यर्थे। **पुरा** अविरते, चिरातीते, भविष्यदासन्ने च। **मिथो, मिथस्** इद द्वय रहसि, सहार्थे च। **प्रायस्** बाहुल्ये। **मुहुस्** पुनरर्थे। **प्रबाहुकम्** समकाले, ऊर्ध्वार्थे च। **प्रवाहिका** इति पाठान्तरम्। **आर्यहलम्** बलात्कारे । शाकटायनस्तु आर्येति प्रतिबन्धे, हलमिति निषेधानुवादयोरित्याह । **अभीक्ष्णम्** पौन पुन्ये । **साकम्, सार्धम्** इद द्वय सहार्थे । **नमस्** नतौ । **हिरुक्** वर्जने। **धिक्** निन्दाभर्त्सनयो । **अम्** शैघ्र्ये, अल्पे च । **आम्** अङ्गीकारे। **प्रताम्** ग्लानौ। **प्रशाम्** समानार्थे। **प्रतान्** विस्तारे। अत्र प्रतान् इति नान्तस्य पुन पाठसामर्थ्यात् **प्रताम्, प्रशाम्** इति पूर्वयो 'मो नो धातो' इति नत्वन्न। **प्रशान्** इति नान्तपाठस्तु साम्प्रदायिक । 'कृन्मेजन्त' इति सूत्रे भाष्यस्वरसोऽप्येवमिति शब्देन्दुशेखरे स्थितम्। **मा, माङ्** एतौ निषेधे। **आकृतिगणोऽयमिति** । ततश्च अन्येऽप्येवञ्जातीयका स्वरादिगणे ज्ञेया । तथाहि, **कामम्** स्वाच्छन्द्ये। **प्रकामम्** अतिशये। **भूयस्** पुनरर्थे। **साम्प्रतम्** न्याय्ये। **परम्** किन्त्वर्थे। **साक्षात्** प्रत्यक्षे। **साचि** तिर्यगर्थे। **सत्यम्** अर्धाङ्गीकारे। **मङ्क्षु, आशु** इद द्वय शैघ्र्ये। **संवत्** वर्षे। **अवश्यम्** निश्चये। **सपदि** शैघ्र्ये। **बलवत्** अतिशये। **प्रादुस्, आविस्** इद द्वय प्रकाशे। **अनिशम्, नित्यम्, सदा, अजस्रम्, सन्ततम्** एतत्पञ्चक सातत्ये। **उषा** रात्रौ । **रोदसी** द्यावाप्रथिव्यर्थे। **ओम्** अङ्गीकारे, ब्रह्मणि च। अत्र अश्च उश्च म् चेति समाहारद्वन्द्वे, ब्रह्मवाची ओम्शब्द ब्रह्मविष्णुशिवात्मक ब्रह्मवाची। 'अवतेष्टिलोपश्च' इत्युणादिव्युत्पन्नस्तु ब्रह्मण्यङ्गीकारे चेति विवेक । 'अवतेष्टिलोपश्च'

च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् । भूयस् । कूपत् । सूपत् । कुवित् । नेत् । चेत् । चण् । कच्चित् । किञ्चित् । यत्र । नह । हन्त । माकि । माकिम् । नकि । आकिम् । नकिम् । माङ् । नञ् । यावत् । तावत् । त्वै । द्वै । न्वै । रै । श्रौषट् । वौषट् । स्वाहा । स्वधा । वषट् । ओम् । तुम् ।

---

इत्यस्यायमर्थ, अवधातोर्मन् स्यात् प्रत्ययस्य टिलोपश्चेति । अव् म् इति स्थिते 'ज्वरत्वर' इति वकारस्य उपधाभूतस्याकारस्य च ऊठ्, ऊकारद्वयस्य सवर्णदीर्घे, 'सार्वधातुक' इति तस्य गुण, ओमिनि रूपम् । उभयोरपि स्वरादित्वम् । नचौणादिकस्य 'कृन्मेजन्त' इत्येव सिद्धमिति वाच्यम् । उणादौ हि 'च्विरव्ययम्' इति पठ्यते । च्व्यन्ताना निपातत्वादेव सिद्धे नियमार्थमिदम् । उणादिपठितानाञ्चादिस्वरादिपठितानाञ्चेदव्ययत्व, तर्हि च्विरेवाव्यय नेतरदिति । ततश्च ओमित्यस्य औणादिकस्याप्राप्ते अव्ययत्वे स्वरादिपाठ इत्यलम् । **भूः** पृथिव्याम् । **भुवर्** अन्तरिक्षे । **झटिति, द्राक्, तरसा** त्रयमिद शैघ्र्ये । **सुष्ठु** प्रशसायाम् । **दुष्ठु** निकृष्टे । **सु** पूजायाम् । **आः** आश्चर्ये । **कु** कुत्सिते, ईषदर्थे च । **अञ्जसा** तत्वे, शीघ्रार्थे च । **मिथु** द्वावित्यर्थे । **अस्तम्** विनाशे । **स्थाने** युक्तार्थे । **ताजक्** शैघ्र्ये । **चिराय, चिररात्राय, चिरस्य, चिरम्, चिरेण, चिरात्** इति षट्क चिरार्थकम् । **वरम्** ईषदुत्कर्षे । **आनुषक्** आनुपूर्व्ये । **अनुषक्** अनुमाने । **अमेनः** शीघ्रसाम्प्रतिकयो । **सुदि** शुक्लपक्षे । **वदि** कृष्णपक्षे । इत्यादि ॥

इति स्वरादय ।

---

अथ चादीनाह । **च वा** इत्यादिना । **च** समुच्चयान्वाचयेतरेतरयोगसमाहारेषु । **वा** विकल्पादिषु । वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये । **ह** प्रसिद्धौ । **अह** अद्भुते, खेदे च । **एव** अवधारणे, अनवक्लृप्तौ च । **एवम्** उक्तपरामर्शे । **नूनम्** निश्चये, तर्के च । **शश्वत्** पौन पुन्ये, नित्ये, सहार्थे च । **युगपत्** एककाले । **भूयस्** पुनरर्थे, आधिक्ये च । **कूपत्** प्रश्ने, प्रशसाया च । **कुवित्** भूर्यर्थे, प्रशसाया च । **नेत्** शङ्काया, प्रतिषेधविचारसमुच्चयेषु च । **चेत्** यद्यर्थे । **चण्** अय चेदर्थे णित्, समुच्चयादिष्वननुबन्धक, स्वरे भेद फलम् । **कच्चित्** इष्टप्रश्ने । **यत्र** अनवक्लृप्त्यमर्षगर्हाश्चर्येषु । नावकल्पयामि, नमर्षये, गर्हे, आश्चर्ये वा 'यत्र भवान् वृषळ याजयेत् ।' **नह** प्रत्यारम्भे । **हन्त** हर्षे, विषादे, अनुकम्पाया, वाक्यारम्भे च । **माकिः, माकिम्, नकिः**, इद त्रय वर्जने । **माङ्नञौ** स्वरादिषूक्तौ । अन्यतरत्र पाठ इति युक्तम् । उभयत्र पाठस्तु व्यर्थ एव । नच निपातस्वरार्थ इह पाठ इति वाच्यम् । 'फिषोऽन्त उदात्त' इत्येव तत्सिद्धे । नच सत्ववचनत्वेऽप्यव्ययत्वार्थ स्वरादिपाठ इति वाच्यम् । तथा सति लक्ष्मीवाचकस्यापि माशब्दस्याव्ययत्वापत्ते । तस्माच्चादिष्वेव माङ् नञौ पाठ्यावित्याहु । **यावत्, तावत्** इद द्वय साकल्यावधिमानावधारणेषु । **त्वै** विशेषवितर्कयो । **द्वै** वितर्के । **न्वै** इति पाठान्तरम् । **रै** दाने, अनादरे च । **श्रौषट्, वौषट्,**

तथाहि। खलु। किल। अथो। अथ। सुष्ठु। स्म। आदह। 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' (ग १६)। अवदत्तम्। अहयु'। अस्तिक्षीरा। अ। आ। इ। ई। उ। ऊ। ए। ऐ। ओ। औ। पशु। शुकम्। यथाकथाच। पाट्। प्याट्। अङ्ग। है। हे। भो.। अये। द्य। विषु। एकपदे। युत्। आत'। चादिरप्याकृतिगण ॥

इति चादय ।

---

**स्वाहा** इद त्रय देवहविर्दाने। **स्वधा** पितृदाने। श्रौषडादीनामनेकाचा त्रयाणा स्वरभेदार्थ उभयत्र पाठ। **तुम्** तुङ्कारे। **तथाहि** निदर्शने। **खलु** निषेधवाक्यालङ्कारनिश्चयेषु। **किल** इति इवार्थे, वार्तायाम्, अलीके च। **अथ** अय मङ्गलानन्तरारम्भप्रश्नकात्स्न्याधिकारप्रतिज्ञासमुच्चयेषु। अय स्वरादावपि। तेन मङ्गलवाचकस्य सत्वार्थकत्वेऽप्यव्ययत्वम्। तथाच श्रीहर्ष। (श्लो) "यथा कुलाचारमथावनीन्द्रजा पुरन्ध्रिवर्गस्स्नपयाम्बभूव ताम्।" इति अथ स्नपयाम्बभूव इत्यस्य मङ्गलस्नान कारयामासेत्यर्थ। निपातश्चाथशब्द मृदङ्गादिध्वनिवत् मङ्गलम्। **सुष्ठु** स्वरभेदार्थ पुन पाठ। **स्म** अतीते, पादपूरणे च। **आदह** उपक्रमहिसाकुत्सनेषु। **उपसर्गविभक्तिस्वरप्रतिरूपकाश्च** ॥ चादिगणसूत्रमतत्। उपसर्गप्रतिरूपका विभक्त्यन्त प्रतिरूपका अच्प्रतिरूपकाश्च चादिगणे पाठ्या इत्यर्थ। तत्रोपसर्गप्रतिरूपकमुदाहरति। **अवदत्तम् इति** ॥ अत्र अवेत्युपसर्गप्रतिरूपक, नतूपसर्ग। ततश्च 'अच उपसर्गात्त' इति तो न भवति। तादेशे तु अवत्तमिति स्यात्। **अहंयुरिति** ॥ अहमिति सुबन्तप्रतिरूपकम्, अहङ्कारे। 'अहशुभमोर्युस्' इति मत्वर्थीयो युस्। अत्र अहमिति न युष्मच्छब्दस्य प्रथमैकवचनम्। तथा सति 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य मदादेशे मद्युरित्यापत्ते। **अस्तिक्षीरेति** ॥ अस्ति क्षीर यस्या इति बहुव्रीहि, अत्र अस्तीति तिडन्तप्रतिरूपकमव्यय, नतु तिडन्तम्। तथा सति बहुव्रीह्यनुपपत्ते। 'अनेकमन्यपदार्थे' इति बहुव्रीहिविधौ सुबित्यनुवृत्ते। एवञ्च "बहुव्रीहिविधौ 'अस्तिक्षीरेत्युपसङ्ख्यानम्' इति वार्तिकन्न कर्तव्यम्" इति 'अनेकमन्यपदार्थे' इति सूत्रे भाष्ये स्पष्टम्। स्वरप्रतिरूपकानुदाहरति। **अ** इत्यादिना। अ सम्बोधने। **आ** वाक्यस्मरणयो। **इ** सम्बोधनजुगुप्साविस्मयेषु। **ई, उ, ऊ, ए, ऐ, ओ, औ** इति सप्तक सम्बोधने। **पशु** सम्यगर्थे। **शुकम्** शैघ्र्ये। **यथाकथाच** सङ्घातोऽयमनादरे। **पाट्, प्याट्, अङ्ग, है, हे, भोः, अये** एते सप्त सम्बोधने। **द्य** हिंसाप्रातिलोम्यपादपूरणेषु। **विषु** नानार्थे। **एकपदे** अकस्मादित्यर्थे। **युत्** कुत्सायाम्। **आतः** इतोऽर्थे। **चादिरप्याकृतिगणः इति**। **यत्, तत्** द्वय हेतौ। **आहोस्वित्** विकल्पे। **सम्** सर्वतोभावे। **कम्** पादपूरणे। **सुकम्** अतिशये। **अनु** वितर्के। **शम्बत्** अन्त करणे, आभिमुख्ये च। **व** पादपूरणे, इवार्थे च। **चटु, चाटु** द्वय प्रियवाक्ये। **हुम्** भर्त्सने। **इव** सादृश्ये। **अद्यत्वे** इदानीमित्यर्थे। इत्यादि। अत्र स्वरादिचाद्योराकृतिगणत्वेऽपि येषा निपातस्वर इष्ट ते चादिषु, अन्ये तु स्वरादिषु। स्वरद्वयभाजस्तु उभयत्र बोध्या ॥

इति चादय ।

## ४४८ । तद्धितश्चासर्वविभक्तिः । (१-१-३८)

यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात् । परिगणनं कर्तव्यम् । तसिलादय. प्राक्पाशप । शस्प्रभृतय प्राक्समासान्तेभ्य । अम । आम् । 'कृत्वोऽर्था' । तसिवती । नानाञाविति । तेनेह न । पचतिकल्पम् । पचतिरूपम् ।

अथ स्वरादिचादिभिन्नान्यव्ययान्याह । **तद्धितश्चासर्वविभक्ति.** ॥ असर्वविभक्तिरिति बहुव्रीहि । तत्र सर्वा विभक्तय यस्मान्न भवन्तीति बहुवचनान्तविग्रहो न सम्भवति । अव्ययेभ्य सप्ताना विभक्तीना उत्पत्त्यभ्युपगमात् । तथाहि 'तद्धितश्च' इति प्रकृतसूत्रे भाष्ये तावत् 'द्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति सूत्रविन्यास भङ्क्त्वा 'एकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनम्' इति सूत्रन्यास कृत्वा एकवचनमुत्सर्गत करिष्यते, द्विबह्वोरर्थयो, तस्य द्विवचनबहुवचने बाधके, इत्यादि स्थितम् । ततश्च एकवचनमित्यनेन ङयाप्प्रातिपदिकात् एकवचनम्भवतीति सामान्यविधिना द्वित्वबहुत्वाभावे एकवचनमिति लभ्यते । एवञ्च द्विबहुत्वाभावे, सति एकत्वे तदभावे च एकवचनमिति फलति । तत्र द्वित्वबहुत्वयो द्विवचनबहुवचनोक्त्यैव ततोऽन्यत्र एकवचनस्य सिद्धत्वात् 'एकवचनम्' इति सूत्र कर्मत्वाद्यभावेऽपि प्रापणार्थं सम्पद्यते । तथाच अलिङ्गसङ्ख्येभ्योऽव्ययेभ्य एकवचन प्रवर्तमान विनिगमनाविरहात् सर्वविभक्त्यैकवचन भवति । अत एव 'अव्ययादाप्सुप' इत्यत्र प्रत्याहारग्रहणमर्थवत्। तस्मात्सर्वा विभक्तय यस्मादिति न विग्रह, किन्तु सर्वशब्दोऽत्र सर्व पटो दग्ध इतिवत् अवयवकार्त्स्न्ये वर्तते । एवञ्च सर्वा वचनत्रयात्मिका विभक्ति यस्मान्नोत्पद्यते, किन्त्वेकवचनान्येवोत्पद्यन्ते, स तद्धितान्तोऽव्ययसञ्ज्ञस्स्यादिति फलतीत्यभिप्रेत्य आह । **यस्मादिति** । **सर्वेति** ॥ वचनत्रयात्मिकेत्यर्थ । **नोत्पद्यते इति** ॥ किन्त्वेकवचनान्येवोत्पद्यन्ते इति शेष । स्यादेतत्, तिङश्चेत्यनुवृत्तौ 'प्रशसाया रूपप्' इति रूपप्प्रत्यये 'ईषदसमाप्तौ कल्पप्' इति कल्पप्प्रत्यये च पचतिरूप पचतिकल्पमिति रूपम्। प्रशस्त पचति ईषत् पचतीत्यर्थ । अत्राप्यव्ययत्व स्यात्, असर्वविभक्तितद्धितान्तत्वात् । किञ्च उभयशब्दे अतिव्याप्ति, तस्याप्यसर्वविभक्तितद्धितान्तत्वादित्यत आह । **परिगणनमिति** ॥ वार्तिकमेतत् । **तसिलादयः इति** ॥ 'पञ्चम्यास्तसिल्' इत्यारभ्य 'द्वित्र्योश्च धमुञ्' इत्यन्ता इत्यर्थ । **शस्प्रभृतयः इति** ॥ 'बह्वल्पार्थात्' इत्यारभ्य 'अव्यक्तानुकरणात्' इति डाजन्ता इत्यर्थ । **अम्, आमिति** ॥ 'अमु च च्छन्दसि' इत्यम् 'किमेत्तिङव्यय' इत्याम् च गृह्यते । **कृत्वोऽर्थाः इति** ॥ 'सङ्ख्याया क्रियाभ्यावृत्तिगणने कृत्वसुच्, द्वित्रिचतुर्भ्यस्सुच्, विभाषा बहोर्धा' इति त्रय इत्यर्थ । **तसिवती इति** ॥ 'तेनैकदिक्, तसिश्च' इति तसि 'तेन तुल्यम्' इत्यादिविहितो वतिश्च गृह्यते 'प्रतियोगे पञ्चम्यास्तसि' इत्यस्य तु शस्प्रभृतित्वादेव सिद्धम्। एवञ्च स्वरादिषु वदित्यस्य प्रयोजन चिन्त्यम् । **नानाञाविति** ॥ 'विनञ्भ्यान्नानाञौ न सह' इति परिगणन कर्तव्यमित्यन्वय । परिगणनेनैव सिद्धे 'तद्धितश्च'

## ४४९ । कृन्मेजन्तः । (१-१-३९)

कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । स्मारंस्मारम् । जीवसे । पिबध्यै ।

## ४५० । क्त्वातोसुन्कसुनः । (१-१-४०)

एतदन्तमव्ययं स्यात् । कृत्वा । उदेतो । विसृप ।

## ४५१ । अव्ययीभावश्च । (१-१-४१)

अधिहरि ।

## ४५२ । अव्ययादाप्सुपः । (२-४-८२)

अव्ययाद्विहितस्याप सुपश्च लुक् स्यात् । तत्र शालायाम् । अथ विहित-विशेषणान्नेह । अत्युच्चैसौ । अव्ययसञ्ज्ञायां यद्यपि तदन्तविधिरस्ति, तथापि न गौणे । 'आब्ग्रहणं व्यर्थमलिङ्गत्वात्' (वा १६३३) ।

इति सूत्र न कर्तव्यमिति भाव । **कृन्मेजन्तः** ॥ कृत् मेजन्त इति छेद ।। म् च एच मेचौ तौ अन्ते यस्येति बहुव्रीहि । तदाह । **कृद्यो मान्तः इति** ॥ **तदन्तमिति** ॥ केवलस्य कृत प्रयोगानर्हत्वात् सञ्ज्ञाविधावपि तदन्तविधिरिति भाव । **स्मार स्मारमिति** ॥ 'आभीक्ष्ण्ये णमुल् च' इति स्मृधातोर्णमुल् 'अचो ञ्णिति' इति वृद्धि, रपरत्वम्, 'नित्यवीप्सयो' इति द्वित्व, मान्तकृदन्तत्वादव्ययत्वम् । **जीवसे इति** ॥ 'तुमर्थे सेसेनसे' इत्यादिना असेप्रत्यय । **पिबध्यै इति** ॥ 'तुमर्थे से' इत्यादिना शध्यैप्रत्यय । शित्त्वात् सार्वधातुकत्वम् । 'पाघ्रा-मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदाम्' इति पिबादेश इति भाव, शप् तु न, कर्त्रर्थे सार्वधातुके तद्विधे 'अव्ययकृतो भावे' इति सिद्धान्तादित्याहु । **क्त्वातोसुन्कसुनः** ॥ **कृत्वेति** ॥ 'समानकर्तृकयो' इति क्त्वा । **उदेतोरिति** ॥ उत्पूर्वादिण भावलक्षणे इत्यादिना तोसुन् । **विसृपः इति** ॥ सृपितृदो कसुन् । **अव्ययीभावश्च** ॥ अव्ययसञ्ज्ञस्स्यादिति शेष । **अधि-हरीति** ॥ विभक्त्यर्थेऽव्ययीभाव, हराविल्यर्थ । 'अव्ययादाप्सुप' आप् च सुप् च आप्सुप् तस्य आप्सुप, समाहारद्वन्द्वात् षष्ठी । 'ण्यक्षत्रियार्ष' इत्यतो लुगित्यनुवर्तते । तदाह । **अव्ययाद्विहितस्येति** ॥ **तत्र शालायामिति** ॥ तत्रेत्यस्याव्ययत्वात् आपो लुक् । स्त्रीत्व बोधनाय शालायामिति । **अथेति** ॥ अत्र सुपो लुक् । **विहितेति** ॥ अव्ययात्परस्येत्यनुक्त्वा अव्ययाद्विहितस्येति व्याख्यानादिति भाव । **अत्युच्चैसाविति** ॥ उच्चैरतिक्रान्त इति विग्रहे 'अत्यादय क्रान्ताद्यर्थे द्वितीयया' इति समास । अधिकरणशक्तिप्रधानान्यव्ययानि वृत्तिविषये शक्तिमत्प्रधानानि भवन्ति । यथा दोषामन्यमह, दिवाभूता रात्रिरिति । अतो द्वितीयासम्भवात् 'अत्यादय' इति द्वितीयासमासस्याविरोध । अत्र समासाद्विहितस्य सुप अव्ययभूतादुच्चैश्शब्दात् परत्वेऽपि ततो विहितत्वाभावात् न लुक् । अत्युच्चैरिति समुदायस्य तु नाव्ययत्वम्, स्वरादिगणे

'सदृश त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥"

इति [भाष्योक्ता] श्रुतिर्लिङ्गकारकसंख्याभावपरा।

"बष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो।
आपं चैव हलन्ताना यथा वाचा निशा दिशा ॥"

---

उच्चैश्शब्दस्य केवलस्य पाठादिति भाव। ननु स्वरादिगणे केवलोच्चैश्शब्दस्य पाठेऽपि 'स्वरादिनिपातमव्ययम्' इति अव्ययसज्ञा भवत्येव 'प्रयोजन सर्वनामाव्ययसज्ञायाम्' इति वचनादित्याशङ्कते। **अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्तीति** ॥ परिहरति। **तथापि न गौणे इति** ॥ सर्वनामसज्ञायामुपसर्जनस्य नेति प्रकृत प्रतिषेध अव्ययसज्ञाविधावनुवर्तत इति 'तद्धितश्चासर्वविभक्ति' इति सूत्रे भाष्ये स्पष्टमिति भाव। **आब्ग्रहणं व्यर्थमिति** ॥ "अव्ययादाप्सुप' इति सूत्रे इति शेष। **अलिङ्गत्वादिति** ॥ अव्ययाना लिङ्गाभावादित्यर्थ। तथाच वार्तिकम्, 'अव्ययादाब्लुग्वचनानर्थक्य लिङ्गाभावात्' इति, तथा 'तद्धितश्चासर्वविभक्ति' इति सूत्रे भाष्येऽप्युक्तम्। स्त्रीपुन्नपुसकत्वानि सत्वगुणा एकत्वद्वित्वबहुत्वानि च एता नर्थान् ये न वियन्ति तदव्ययमिति। ननु अव्ययाना लिङ्गाभावे 'सदृश त्रिषु लिङ्गेषु' इत्यथर्वणश्रुतिविरोध इत्याशङ्कय परिहरति। **सदृशमिति** ॥ त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु सर्वेषु वचनेषु च यत् न व्येति विकार न प्राप्नोति, किन्तु सदृश एकप्रकारमेव भवति तदव्ययमिति अथर्वणश्रुतियोजना। अत्र विभक्तिवचनशब्दौ कारकसङ्ख्यापरौ, नतु प्रत्ययपरौ, अन्यतरग्रहणवैयर्थ्यात्। **लिङ्गकारकेति** ॥ लिङ्गकारकसङ्ख्याभाव तात्पर्यविषयभूत यस्या इति विग्रह। लिङ्गेष्वित्यादिषु सप्तमी हि 'षष्ठीचानादरे' इति विहिता। तथाच लिङ्गकारकसङ्ख्या अनादृत्य यत्र व्येति विकार न प्राप्नोति, किन्तु सदृशम् एकप्रकारमेव भवति, तदव्ययमित्युदाहृतश्रुतेरर्थ। 'तद्धितश्चासर्वविभक्ति' इति सूत्रभाष्ये स्त्रीपुन्नपुसकत्वानि सत्वगुणा एकत्वद्वित्वबहुत्वानि च एतानर्थान् ये न वियन्ति तदव्ययमित्युपक्षिप्य तत्र प्रमाणतया अस्या श्रुतेरुदाहृतत्वादिति भाव। अय च लिङ्गकारकसङ्ख्याभावनियम निपातानामेव, स्वरादीनान्तु कति पयाना लिङ्गकारकसङ्ख्यान्वयोऽस्त्येव 'स्वरादिनिपातमव्ययम्' इति सूत्रे भाष्ये चादीनाम सत्त्ववचनानामेव सज्ञा। स्वरादीनान्तु सत्त्ववचनानामसत्त्ववचनानाञ्च इत्युक्तत्वात्। 'स्वस्ति वाचयति, स्वस्ति वाच्य इति, क्षीणे पुण्ये स्व पतति, प्रातर्यजते' इत्यादौ कर्मकारकयोगदर्शनाच्च। अथ प्रसङ्गादाह। **वष्टीति** ॥ अव, अपि इत्युपसर्गयो अकारस्य लोप हलन्तानाम् आपञ्च भागुरिनामक आचार्य वष्टि, इच्छतीत्यर्थ। एवशब्दस्तु पादपूरण। अवेत्युपसर्गे। आदेरेवाकारस्य लोप नान्त्यस्य, अपिना साहचर्यात्। भागुरिशब्द दन्त्योष्ठ्यादिं केचित्पठन्ति। तत्वबोधिन्यान्तु पवर्गचतुर्थादि पठित, शब्देन्दुशेखरेऽप्येवम्। **यथा वाचेति** ॥ परिगणनमिति केचित्। उदाहरणमात्रमित्यन्ये। यद्यपि 'वश कान्तौ' इत्यस्य छन्दोमात्रविषयत्व वक्ष्यते। तथापि अस्मादेव लिङ्गाल्लोकेऽपीत्याह। वस्तुतस्तु वष्टि भागुरिरिति श्लोको भाष्ये न दृश्यते।

वगाह् —अवगाहः । पिधानम्—अपिधानम् ।

इत्यव्ययप्रकरणम् ।

---

प्रत्युत 'ङ्याप्प्रातिपदिकात्' इति सूत्रस्थभाष्यपर्यालोचनया नास्तीत्येव युक्तम् । तत्र ह्येवमुक्त "आब्ग्रहणन्न कार्यं, खट्वा मालेत्यादौ अन्तवत्त्वेन प्रातिपदिकत्वादेव सिद्धम्" इत्युक्त्वा, क्रुञ्चा उष्णिहा देवविशेति हलन्तात् टाप स्वाद्यर्थमाब्ग्रहणमस्त्विति आक्षिप्य 'क्रुञ्चानालभेत उष्णिहक्कुभौ देवविशश्च' इति अकारान्तादेव तत्रापि टाबित्युक्त्वा 'डाबुभाभ्यामन्यतरस्याम्' इति बहुराजा, बहुराजे, बहुराजा इत्यर्थम् आब्ग्रहणमिति समाहितम् । 'आपञ्चैव हलन्तानाम्' इत्याश्रित्य वाचा निशा दिशेत्युक्तम् । अत्र निशृदिशोरिगुपधलक्षणे के अदन्नत्वाट्टापि निशा इत्यादिरूपसम्भवेऽपि वाचाशब्द असाधुरेवेति शब्देन्दुशेखरे स्थितम् ॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचिताया सिद्धान्तकौमुदीव्याख्याया बालमनोरमाख्यायाम् अव्ययनिरूपण समाप्तम् ।

॥ श्रीरस्तु ॥

# ॥ अकाराद्यनुक्रमेण कौमुदीपूर्वार्धगतसूत्रसूचिका: ॥

॥ श्रीरस्तु ॥

# ॥ अकाराद्यनुक्रमेण कौमुदीपूर्वार्धगतवार्तिकसूचिका: ॥

॥ श्रीरस्तु ॥

# ॥ कौमुदीपूर्वार्धगतपरिभाषासूचिका: ॥